कमाल का मज़ा...गोल्ड स्पॉट का मज़ा




Artificially flavoured. Contains no fruit juice or fruit pulp. **serve chilled**





# चन्दमामा

जून् – १९८५

*

अन्तरङ्गम्



*


प्रतिकृतिमूल्यम् रू. २-००

वार्षिकं ग्राहकशुल्कम् रू. २४-००

# चन्दमामा

संस्थापकः 'चक्रपाणिः' सञ्चालकः 'नागिरेड्डी'

संस्कृतसम्भाषणपरम्पराम् उज्जीवयितुम् इच्छद्भिः अस्माभिः विशेषतः स्त्रियः शिक्षणीयाः। यदि एका माता संस्कृतं जानाति तर्हि सा स्वपुत्रान् पाठयति। मात्रा प्रीत्या सह दत्तं शिक्षणं शिशौ सङ्क्रामति एव। एवं च संस्कृतगृहाणि निर्मितानि भवन्ति।

पूर्वं स्त्रियः संस्कृतशिक्षणतः दूरीकृताः आसन्। तन स्वाभाविकतया गृहभाषात्वं (मातृभाषात्वम) संस्कृतस्य नष्टप्रायम् अभवत्। सम्भाषणपरम्परा च विच्छिन्ना। छिन्ने मूले नैव पुष्पं न शाखाः।

शिशवः मातृसकाशात् नूतनप्रपञ्चस्य परिचयं संस्कृतद्वारा प्राप्नुयुः। एतादृशः शिशवः यदा अधिकसङ्ख्यया भवन्ति तदा संस्कृतस्य परिस्थितिः सर्वथा भिन्ना एव भवेत्।

मातरः अपि स्वयं यावत् जानन्ति तावत् स्वपुत्रान् पाठयेयुः। बालकाः शैशवात् एव संस्कृतासक्ताः यथा भवेयुः तथा प्रयत्नः करणीयः।

सम्पुटः-२ जून् ८५ सञ्चिका-३

प्रतिकृतिमूल्यम् रू. २/- वार्षिकं ग्राहकशुल्कम् रू. २४/-






# चन्दमामा प्रजल्पति



## अपूर्व दृश्यम्

'मध्ययुगीयाः सैनिकाः कीदृशं कवचं धरन्ति स्म ? कथं गच्छन्ति स्म' इत्येतत् सप्रमाणं प्रदर्शयितुम् इच्छन् ब्रिटन् देशीयः बिक् बौन् महोदयः ११२ पौण्ड्मितं कवचं धृत्वा एडिनबरोतः डम्-फ्रीसपर्यन्तं दिनत्रयं यावत् प्रयाणं कृतवान् ।

## कवेः स्मारकम्

संयुक्ता- पृथ्वीराजयोः वीरगाथा सर्वैः अपि ज्ञाता एव । पृथ्वीराजस्य आस्थाने दर्बायनामकः कवि आसीत् । एषः पृथ्वीराजस्य आप्तमित्रम् अपि । एतस्य कवेः मरणस्थानं उत्तरप्रदेशस्य हास्वा नामके स्थाने अस्तीति संशोधकैः शोधितम् अस्ति ।





## भाषान्तरयन्त्रम्

जपानदेशे एकं यन्त्रं निर्मितम् अस्ति यच्च जपान्भाषास्थं विषयम् आंग्लभाषायाम् अनूद्य प्रदर्शयति। एतच्च यन्त्रं प्रतिघण्टं त्रिसहस्रशब्दानाम् अनुवादं करोति ।

# भवन्तः जानन्ति वा ?

१. पेसिफिक् महासागरस्य नामकरणं केन कृतम् ?

२. हिन्दुमहासागरे अत्यन्तगभीरः प्रदेशः कः ?

३. भारतश्रीलङ्कयोः मध्ये विद्यमानः जलसन्धिः कः ?

४. प्रपञ्चे सर्वदीर्घा नदी का ?

५. रोमसमीपे का नदी प्रवहति ?

(उत्तराणि ६४तमे पृष्ठे)



# सहानुभूतिः

चैतन्यः बुद्धिमान्, अध्ययनशीलः अपि। अध्ययनसमाप्तिसमनन्तरम् एव सः नगरे सुलभतया उद्योगं प्राप्तवान्। अतः सः नगरे एव निवासम् आरब्धवान्। अल्पे एव काले तदीयः विवाहः अपि सम्पन्नः। सः प्रतिदिनं भाटकशकटेन कार्यालयं गच्छति स्म। वृद्धानां विषये चैतन्यस्य विशेषसहानुभूतिः।

एकदा याने उपविष्टः चैतन्यः यानस्वामिनं वीरेश्वरं पृष्टवान्- "वीरेश्वर! भवतः पुत्राः तु यथेष्टं धनं सम्पादयन्ति। एवं स्थिते किमर्थं वा भवता आतपे शकटं चालनीयम्? किमर्थम् वा एतावत् कष्टम्? गृहे सुखम् उपविशतु नाम" इति।

वीरेश्वरः हसन् उत्तरितवान्- "श्रीमन्! पुत्रैः सम्पादितं धनं परकीयम् इव भाति मम। यावत् देहे शक्तिः स्थास्यति तावत् अहं परिश्रमं करिष्यामि एव। अत्र एव मम विशेषतृप्तिः" इति।

चैतन्यस्य विद्याभ्यासार्थं तदीयपित्रा बहु कष्टम् अनुभूतम् आसीत्। एतत् ज्ञात्वा यदा चैतन्यः खेदम् अनुभवति तदा पिता वदति स्म- "पुत्र! यदा भवान् समर्थः सन् सम्पादयिष्यति तदा अहं सर्वकार्याणि परित्यज्य सुखेन जीवनं यापयामि" इति।

किन्तु दैवनिर्णयः अन्यथा एव आसीत्। चैतन्येन यदा उद्योगः प्राप्तः ततः पञ्चदश-दिनेभ्यः पूर्वं तदीयः पिता अकस्मात् दिवङ्गतः। "मदीयेन सम्पादनेन पितरं किञ्चित्कालं वा तोषयितुं न शक्तवान् किल?" इति चैतन्यः बहु खेदम् अनुभवति स्म।

चैतन्यः येन मार्गेण कार्यालयं गच्छति स्म तस्मिन् मार्गे कश्चित् सप्ततिवर्षीयः वृद्धः कण्डोले शष्कुल्यादिकं संस्थाप्य विक्रयणं करोति स्म। सायङ्काले कार्यालयतः प्रत्यागमनसमये



अपि तं वृद्धं तत्र पश्यति स्म चैतन्यः। 'समग्रं दिनं तीव्रे आतपे एषः वृद्धः उपविशति' इति स्मृत्वा एव चैतन्यस्य मनः उद्विग्नम्।

एकदा दशदिनानि यावत् सः वृद्धः चैतन्येन न दृष्टः। 'अकस्मात् मृतः स्यात् वा ?' इति चैतन्यस्य मनसि सन्देहः उत्पन्नः। किन्तु अनन्तरदिने पुनः तं वृद्धं यदा दृष्टवान् तदा सः अपरिमितं सन्तोषम् अनुभूतवान।

शकटात् अवतीर्य वृद्धसमीपं गत्वा चैतन्यः तं वृद्धं पृष्टवान्- "दशदिनेभ्यः भवान् न दृष्टः। किं कारणम् ?" इति।

सः वृद्धः शिरः कम्पयन् क्षीणस्वरेण उक्तवान्- "एवं तर्हि भवान् मां प्रतिदिनं पश्यन् अस्ति इति सिद्धम्। किं वदामि श्रीमन्! गतसप्ताहे ज्वरेण सुप्तः। मृत्युमुखं प्रविश्य प्रत्यागतः इव।"

वृद्धस्य वचनेन चैतन्यस्य मनसि करुणा उत्पन्ना। सः पृष्टवान्- "कण्डोले विद्यमानं सर्वं विक्रीतं चेत् कियत् लभ्यते ?" इति।

"चत्वारि रूप्यकाणि। तेषु एकं रूप्यकं लाभरूपेण प्राप्नोमि" इति उक्तवान् वृद्धः।

"तर्हि कण्डोले विद्यमानं सर्वं ददातु। पञ्च रूप्यकाणि ददामि" इति उक्तवान् चैतन्यः।

अनन्तरं सः सर्वाणि खाद्यानि शकटे आरोप्य, पञ्चरूप्यकाणि दत्त्वा शकटम् आरुह्य ततः गतवान्।

मार्गे वीरेश्वरः पृष्टवान्- "श्रीमन्! एतत् सर्वं नीत्वा भवान् किं करोति ?" इति।

"अहं किं कर्तुं शक्नोमि? भवान् एव नयतु। बालकेभ्यः वितरतु" इति उक्तवान् चैतन्यः।

अनन्तरदिने अपि एवम् एव प्रवृत्तम्। चैतन्यः वृद्धस्य समीपे विद्यमानानि सर्वाणि खाद्यानि क्रीत्वा पञ्चरूप्यकाणि दत्तवान्। वृद्धं गृहं प्रेषितवान् च।

तृतीयदिने अपि यदा चैतन्यः वृद्धस्य समीपे शकटं स्थगयितुम् उक्तवान् तदा वीरेश्वरः पृष्टवान्- "श्रीमन्! प्रतिदिनं पञ्चरूप्यकाणि कियन्ति दिनानि यावत् भवान्

दातुं शक्नोति ?'' इति।

"यावत् सः वृद्धः जीवति तावत्'' उक्तवान् चैतन्यः।

यदा सः वृद्धस्य समीपं गत्वा पञ्च रूप्यकाणि दातुं सिद्धः तदा वृद्धः नमस्कृत्य उक्तवान्-"महाभाग ! सर्वाणि खाद्यवस्तूनि भवान् एव क्रीणाति। तेन अहं कष्टम् अनुभवामि। अल्पे एव काले विक्रयणस्य समाप्तेः कारणतः अहं शीघ्रम् एव गृहं प्राप्नोमि। तत्र सुखेन मम उपवेशनं सोढुं न शक्नोति मम पुत्रः। अतः दिनपूर्णं किमपि कार्यं वदति सः। किन्तु कष्टकार्यं कर्तुं मम शक्तिः नास्ति। ह्यः मया काष्ठविदारणं करणीयम् आपतितम्'' इति।

एतत् श्रुत्वा चैतन्यः आश्चर्येण स्तम्भितः इव। तेनैव सह खेदम् अपि अनुभूतवान्। पुत्रकारणतः सुखं प्राप्तव्यम् इति तदीयः पिता चिन्तयति स्म। किन्तु अवकाशप्राप्तेः पूर्वम् एव सः दिवङ्गतः। सः वीरेश्वरः तु अवकाशे प्राप्ते अपि पुत्राणाम् अवलम्बनं अनिच्छन् शकटं चालयति। एतस्य वृद्धस्य पुत्रः एव पितुः सुखं न इच्छति। अतः एषः चिन्तयति यत् पुत्रस्य पीडायाः सहनस्य अपेक्षया आतपे उपविश्य विक्रयणकार्यम् एव वरम् इति। कीदृशः विलक्षणः लोकः एषः।

एतस्य पुत्राय सम्यक् विवेकः बोधनीयः इति चैतन्यः चिन्तितवान्। अतः सः वृद्धं पृष्टवान्- "पितः ! भवान् मम गृहम् आगन्तुं शक्नोति वा ?"इति।



वृद्धः क्षणकालं मौनं स्थित्वा उक्तवान्- "मम पुत्रः न अङ्गीकरोति । पुनः मया एव कष्टम् अनुभोक्तव्यं भवेत्" इति ।

"तत्सर्वम् अहं परिहरिष्यामि । उत्तिष्ठतु, शकटे उपविशतु" इति उक्त्वा चैतन्यः वृद्धस्य हस्तं गृहीत्वा तं शकटे उपवेशितवान्, स्वगृहं नीतवान् च ।

पितुः आगमनं ज्ञात्वा वृद्धस्य पुत्रः चिन्ताकुलः अभवत् । इतस्ततः विचार्य अनन्तरदिने सः चैतन्यस्य गृहम् आगतवान् ।

तीव्रे आतपे वृद्धेन अनुभूयमानं कष्टं समग्रम् उक्त्वा चैतन्यः तं युवकं पृष्टवान्- "वृद्धस्य पितुः सुखजीवनार्थं व्यवस्था करणीया आसीत् भवता । किन्तु भवान् तद्विपरीततया पित्रा सम्पादनं करणीयम् इति इच्छति किल ? किम् एतत् उचितम् ?" इति ।

तदा सः युवकः तत् निराकुर्वन् उक्तवान्- "तादृशः स्वार्थी न अहम् । पित्रा यत् सम्पाद्यते तत् धनं तस्य अशनवसनादीनां कृते एव अहं व्ययीकरोमि"

"एवं तर्हि भवतः पितरम् अहं मम गृहे स्थापयामि । अशनवसनादीनां व्यवस्थां अहं करोमि । अत्र भवतः कोऽपि आक्षेपः नास्ति किल ?" इति पृष्टवान् चैतन्यः ।

सः युवकः पितुः मुखं पश्यन् लज्जया अवमानेन च शिरः अवनमितवान् । तदा चैतन्यः- "वृद्धावस्थायां स्थितः भवदीयः पिता भवतः गृहे एव भवेत्, इति अहं जानामि एव । एषः एव उचितः धर्मः । किन्तु धर्मस्य एतदपि अङ्गं यत् पिता भवता कर्मकरः इव न द्रष्टव्यः, अपितु पितृवात्सल्येन द्रष्टव्यः । तदा एव पितुः आशीर्वादः भवन्तं रक्षति" इति उक्तवान् ।

युवकस्य नेत्राभ्याम् अश्रूणि निर्गतानि । सः कृतज्ञतापूर्वकं चैतन्यं नमस्कृत्य,- "पितः ! इदानीं गृहं गच्छावः । अद्य मयि विवेकः उदितः" इति वदन् पितरम् आत्मना सह नीतवान् ।



# कांस्य-दुर्गम्



-५-

[चन्द्रवर्मा स्वसेनापतिना धीरमल्लेन सह नगरं प्रविश्य अनेकान् शत्रुसैनिकान् मारितवान्। अत्रान्तरे सर्पकेतुः सेनया सह आगतवान्। चन्द्रवर्मा सुबाहुः धीरमल्लः च सैनिकैः सह दुर्गस्य रक्षणार्थं धावितवन्तः। तैः दृष्टं यत् शत्रुसैनिकाः दुर्गं परितः आक्रम्य द्वारभञ्जनार्थं प्रयत्नं कुर्वन्तः सन्ति। चन्द्रवर्मा अकस्मात् आक्रमणम् उद्घोषितवान्। ततः . . .]

चन्द्रवर्मणः सर्पकेतोः च सैनिकानां मध्ये प्रवेशद्वारसमीपे युद्धम् आरब्धम्। सर्पकेतु-सैनिकाः सङ्ख्यया चन्द्रवर्मणः सैनिकानाम् अपेक्षया पञ्चगुणिताः आसन्। तथापि ते चन्द्रवर्मणः सैनिकानां पुरतः हतप्रभाः! किन्तु यदा तैः चन्द्रवर्मणः सेनायाः सामर्थ्यं न्यूनम् इति ज्ञातं तदा ते उत्साहेन युद्धं कर्तुम् आरब्धवन्तः।

द्वयोः दलयोः मध्ये बहुकालपर्यन्तं घोरं युद्धं प्रवृत्तम्। महता प्रयत्नेन अपि चन्द्रवर्मा दुर्गद्वारस्य समीपं गन्तुं न शक्तः आसीत्। किं करणीयम् इति सः यावत् चिन्तयन् आसीत् तावत् दूरे कुत्रचित् अभिमुखम् आगच्छतः अश्वदलस्य खुरपुटध्वनिः स्पष्टं श्रुतः। तदा सुबाहुः स्वकीयम् अश्वं परिवर्त्य चन्द्रवर्मसमीपं गत्वा उक्तवान्- "युवराज!



वयम् इदानीम् उभयसङ्कटे पतिताः। पृष्टतः अपि आक्रमणं कर्तुं इच्छन् सर्पकेतुः अश्वदलम् आनीतवान् अस्ति। इतः परम् अपि यदि अत्रैव युद्धं कुर्वन्तः भवामः तर्हि उभयतः आक्रमणेन वयं समूलं नाशिताः भवेम। अतः सम्यक् विचिन्त्य जागरूकतया अग्रिमपदं स्थापनीयम्। बहु चिन्तयितुम् अपि इदानीं कालावकाशः नास्ति। अतः त्वरया निर्णयः स्वीकरणीयः'' इति।

'दुर्गस्य अन्तः प्रवेशः असम्भवः एव' इति चन्द्रवर्मा निश्चितवान्। इदानीं सः शत्रूणां द्वयोः दलयोः मध्ये ग्रस्तः अस्ति। इतः पलायनं विना अन्यः मार्गः नास्ति एव। सेनाधिपतिः धीरमल्लः अपि परिस्थितेः विकटत्वं ज्ञातवान् आसीत्। अतः सः सैनिकानां कोलाहले अपि, उच्चैः युवराजम् उक्तवान्- ''युवराज! भवान् एतत्क्षणे एव इतः पलायनं करोतु। गमनसमये अपायः यथा न भवेत् तथा अहं रक्षणव्यवस्थां करोमि। एकक्षणस्य अपि विलम्बः मास्तु। कृपया इतः धावतु'' इति।

चन्द्रवर्मणा पुनः चिन्तनीयं किमपि न आसीत्। यतः शत्रूणाम् अश्वदलस्य खुरपुटध्वनिः समीपतः एव श्रूयते स्म। चन्द्रवर्मा दुर्गद्वारम् उद्दिश्य अश्वं प्रेरयन् उच्चैः आहूतवान्- 'सुबाहो!' इति।

सुबाहुः तत्क्षणे एव स्वकीयम् अश्वं युवराजस्य समीपम् आनीतवान्। खड्गेन शत्रसैनिकान् नाशयन् पलायनमार्गं निष्कण्टकं कर्तुं प्रयत्नं कृतवान् च।

शत्रुसैनिकाः चन्द्रवर्मणः योजनां न जानान्ति स्म एव। 'अस्माकं सेनयोः मध्ये एते पतिताः सन्ति। विजयप्राप्तिः क्षणमात्रस्य कार्यम्' इति तैः निश्चितम् आसीत्। अतः ते महता उत्साहेन अग्रे गच्छन्तः आसन्। किन्तु चन्द्रवर्मा सुबाहुना सह मौनं पलायनं कुर्वन् अस्ति।

शत्रुसैनिकाः यदा चन्द्रवर्मणः योजनां ज्ञातवन्तः तदा ते तम् अनुसर्तुं प्रयत्नं

कृतवन्तः। किन्तु सेनापतिः वीरमल्लः तेषाम् अवरोधं कृतवान्। एतस्य अवकाशस्य सदुपयोगं स्वीकृत्य चन्द्रवर्मा सुबाहुः च ततः पलायितवन्तौ।

किञ्चिद्दूरं राजामार्गे गत्वा अनन्तरं तौ स्वकीयम् अश्वं नगरस्य दक्षिणद्वारम् उद्दिश्य प्रेरितवन्तौ। चन्द्रवर्मा जानाति स्म यत् इदानीं बहिः गन्तव्यं चेत् दक्षिणद्वारम् एव शरणम् इति। सः एतत् अपि जानाति स्म यत् दक्षिणद्वारम् अपि शत्रुभिः आक्रान्तम् अस्ति इति।




चन्द्रवर्मा सुबाहुः च दक्षिणद्वारसमीपम् आगत्य अश्वं स्थगितवन्तौ, शत्रूणां चलनवलनं सुसूक्ष्मं परिशीलितवन्तौ। समीपे कुत्रापि शत्रुसेना न दृष्टा। द्वारसमीपे पञ्चषाः जनाः उपविश्य वार्तालापं कुर्वन्तः आसन्। तेषां अश्वाः किञ्चिद्दूरे बद्धाः आसन्। ते जनाः द्वाररक्षणे अजागरूकाः सन्ति इति स्पष्टं ज्ञायते स्म। चन्द्रवर्मा युद्धतः परावृत्य एतेन द्वारमार्गेण पलायनं कुर्यात् इति तेषां कल्पना न आसीत् एव।

सुबाहुः न केवलं समर्थसैनिकः, अपि तु सः अवकाशे प्राप्ते कालोचितं निर्णयं स्वी–कर्तुम् अपि समर्थः आसीत्। अतः अस्यां परिस्थितौ किं करणीयम् इति विषये सगम्भीरं चिन्तयति स्म तदीयं मनः। चन्द्रवर्मणः अपि सुबाहोः सामर्थ्ये अचलः विश्वासः आसीत्। अतः सः सुबाहोः विचारं ज्ञातुम् इच्छन् तस्य मुखं दृष्टवान्।

तदा सुबाहुः उक्तवान्- "युवराज! सेना-पतिः धीरमल्लः अल्पेन सैन्येन युद्धं कुर्वन् पृष्ठतः आगच्छन्तीं शत्रुसेनां निवारयन् अस्ति। किन्तु सः बहुकालं यावत् शत्रुसेनां अवरोद्धुं न शक्नोति एव। अल्पे एव काले शत्रुसेना आवाम् अनुगच्छति। अतः यावच्छीघ्रं नगरात् बहिः गन्तव्यम्। भवान् अश्वं वेगेन प्रेरयन् द्वारात् बहिः गच्छतु" इति।

चन्द्रवर्मा श्वासं निरुध्य अश्वं वेगेन प्रेरितवान्। तदा वार्तालापे निमग्नाः सैनिकाः चन्द्रवर्माणं सुबाहुं च दृष्टवन्तः। ते आश्चर्यं



प्रकटयन्तः खड्गम् आकृत्य 'हो हो' इति वदन्तः स्वकीयानाम् अश्वानां समीपं धावितवन्तः ।

''सुबाहो ! त्वरया आगच्छतु। अश्वः एकक्षणं अपि मन्दं न गच्छेत्। गच्छन् एव भवान् समीपम् आगतान् शत्रुसैनिकान् खड्गेन निवारयतु । यावच्छीघ्रं द्वारक्रमणं करणीयम्'' इति उक्त्वा चन्द्रवर्मा स्वकीयम् अश्वं प्रेरितवान् ।

अत्रान्तरे त्रयः शत्रुसैनिकाः अश्वसमीपं गत्वा तान् विमोचितवन्तः। अवशिष्टौ सुबाहुचन्द्रवर्मणोः मार्गम् अवरुध्य खड्गं प्रदर्श्य उक्तवन्तौ- ''अये! कुत्र गमनम्? एकपदम् अग्रे स्थापितं चेदपि प्राणाः निर्गच्छेयुः !" इति ।

''अस्माकं प्राणाः निर्गच्छन्ति उत भवताम् इति पश्यामः तावत्'' इति वदन् सुबाहुः धावन्तम् अश्वं स्थगितवान्, खड्गं सुदीर्घं प्रसार्य एकस्य सैनिकस्य शिरश्छेदं कृतवान् च । चन्द्रवर्मा अपरस्य सैनिकस्य उपरि खड्गप्रहारं कृतवान् । किन्तु सः सैनिकः भीरुः इव कम्पमानः अधोमुखतया भूमौ पतितवान् ।

अत्रान्तरे त्रयः सैनिकाः अश्वम् आरुह्य खड्गं सज्जीकृत्य सुबाहुचन्द्रवर्मणोः अनुसरणं कृतवन्तः ।

सुबाहुः चन्द्रवर्मा च शत्रुसैनिकानाम् अनुसरणम् अविगणय्य अग्रे गतवन्तौ ।

चन्द्रवर्मा अग्रे आसीत् । सुबाहुः तस्य पृष्ठतः गच्छन् आसीत् । तयोः पृष्ठतः 'हो हो' इति कोलाहलं कुर्वन्तः शत्रुसैनिकाः धावन्ति स्म ।

''युवराज ! अहं चिन्तयामि- कुत्रापि सुरक्षिते स्थले स्थित्वा एतेषां नाशनम् एव उचितम् इति । यतः एते आवयोः अनुसरणं न त्यजन्ति एव'' इति उक्तवान् सुबाहुः ।

''सुबाहो ! इदानीं यदि तिष्ठावः तर्हि अपायः सुनिश्चितः एव । अवाभ्यां नगरात् बहिः अगतम् इति सर्पकेतुना एतावति काले एव ज्ञातं स्यात् । आवयोः नाशनार्थं सः सेनया सह आगतः अपि स्यात् एव । अतः आवाम् अग्रे गच्छावः । किञ्चित्कालं यावत्

ते सैनिकाः अनुसरणं कुर्वन्तु नाम। यदि आवां पुरतः दृश्यमानस्य पर्वतस्य शिखरं प्राप्तुं शक्नुवः तर्हि एतेषां नाशनं क्षणमात्रस्य कार्यम्। तावति काले 'एतयोः ग्रहणं न शक्यम्' इति चिन्तयित्वा एते सैनिकाः प्रतिनिवृत्ताः भवेयुः कदाचित्। ते प्रतिनिवृत्ताः न भवन्ति चेदपि आवां सुरक्षिते स्थले स्थित्वा सुलभतया एतेषां नाशनं कर्तुं शक्नुवः। इदानीं तु शत्रुसैनिकानाम् आवयोः च मध्ये विशेषम् अन्तरं नास्ति। अतः यया कया अपि दृष्ट्या अत्र स्थितिः न उचिता। यावच्छीघ्रं सुदूरं गच्छावः प्रथमम्। अनन्तरम् एकत्र उपविश्य विश्रान्तिं स्वीकृत्य अग्रिमकार्यक्रमाणां विषये चिन्तयिष्यावः'' इति उक्तवान् चन्द्रवर्मा।

चन्द्रवर्मणः वचनं यावत् न समाप्तं तावति एव काले एकः बाणः सशब्दम् आगत्य चन्द्रवर्मणः वामभागं स्पृशन् इव अग्रे गतः। 'सुबाहो !' इति उच्चैः आह्वयन् चन्द्रवर्मा उपविष्टः एव अश्वस्य कण्ठस्य उपरि शयितवान्। सुबाहुः दृष्टवान् यत् शत्रुबाणः अग्रे गत्वा मार्गे लग्नः इति।

''युवराज ! अहम् इदानीम् अपि सुस्थः'' इति वदन् सुबाहुः अपि किञ्चित् अवनतः। शरीरस्य उत्तरार्धम् अवनमय्य एव सः पृष्ठतः दृष्टवान्। शत्रुसैनिकेषु एकस्य हस्ते धनुर्बाणा-



दयः आसन्। सः अश्वस्य खलीनं दन्ते गृहीत्वा बाणप्रयोगार्थं सिद्धः आसीत्। 'अपायविषये चन्द्रवर्मा सूचनीयः' इति सुबाहुः यावत् चिन्तितवान् तावति काले एव धनुर्धारिणः तस्य सैनिकस्य अश्वस्य पादः स्खलितः। अतः अश्वः पूर्वावस्थां प्राप्तुं इतस्ततः किञ्चित् अधावत्।

अत्रान्तरे महता वेगेन अनुसृत्य धावत्सु सैनिकेषु कस्यचित् अश्वः वेगेन आगत्य अश्वारोहिणः अश्वेन सङ्घट्टितः अभवत्। इदानीं धनुर्धारी सैनिकः आत्मानं सन्तोलयितुम् अशक्तः अभवत्। उच्चैः आक्रोशनं कुर्वन् सः अधोमुखतया अधः पतितवान्।

पतितस्य तस्य उपरि तत्पक्षीयानाम् एव



अश्वाः धावितवन्तः। सः सैनिकः निर्दयं मर्दितः अभवत्। एतत् दृष्ट्वा सुबाहुः बहु सन्तुष्टः।

इदानीं सुबाहुः अश्वस्य उपरि सम्यक् उपविष्टवान्। तस्य दृढः विश्वासः आसीत् यत् ते सैनिकाः स्वसहचरं म्रियमाणं दृष्ट्वा तूष्णीं न तिष्ठन्ति। तस्य प्रथमोपचारार्थं किञ्चित्कालं तत्र तिष्ठन्ति एव इति।

किन्तु तथा किमपि न जातम्। ते पतितस्य साहाय्यार्थं न स्थितवन्तः। पतितः जीवति वा न वा इत्यपि ते न दृष्टवन्तः। धनुर्धारिणः सैनिकस्य जीवनं तेषां दृष्ट्या अगण्यम् एव। ते वेगेन आगच्छन्तः एव आसन्। एतेन सुबाहोः मनः पुनः अपि उद्विग्नम्।

सः उक्तवान्- "युवराज! धनुर्धारी सैनिकः यः आवयोः अनुसरणं करोति स्म सः भूमौ पतितः। स्वपक्षीयानां सैनिकानाम् अश्वानां पादाघातेन मृतः अपि स्यात्। इदानीं ते त्रयः सैनिकाः अनुसरणं कुर्वन्तः सन्ति। त्रयाणां हस्ते अपि केवलम् एकैकं खड्गम् अस्ति। अतः तेषां मारणं न तथा कष्टकार्यम् इदानीम्" इति।

चन्द्रवर्मा मुखं पृष्ठतः परिवर्त्य तान् सैनिकान् दृष्टवान्। एतेषां यमसदनप्रेषणं न कष्टकरम् इति स्वयं ज्ञातवान् अपि। किन्तु अत्रान्तरे शत्रुसैनिकाः अन्ये आगच्छन्ति चेत् किं करणीयम्? इति किञ्चित् चिन्तयन् आसीत् सः। तावति काले स्खलितः तदीयः अश्वः तत्रैव स्थितः।

सुबाहुः अपि तस्य समीपम् आगत्य स्वकीयम् अश्वं स्थगितवान्। अकस्मात् उभयोः अपि स्थगनं दृष्ट्वा शत्रुसैनिकाः अपि अश्वस्य खलीनम् आकृष्य स्थितवन्तः। चन्द्रवर्माणं सुबाहुं च पश्यन्तः परस्परं मन्त्रालोचनं कर्तुम् आरब्धवन्तः।

तदा सुबाहुः सूचितवान्- "युवराज! एते दुष्टाः युद्धकरणे भीताः इव इति भाति। अतः अस्माभिः एव किमर्थं धैर्यं न करणीयम्? तेषां समीपं गत्वा किमर्थं वा ते न नाश-

नीयाः ?'' इति ।

युवराजः पुनरपि शत्रुसैनिकानाम् उपरि दृष्टिं प्रसार्य- ''सुबाहो ! भवान् युक्तम् एव उक्तवान् । एतान् नाशयावः चेत् आवाम् अग्रे किञ्चिदिव निरातङ्केन गन्तुं शक्नुवः । अतः विलम्बः मास्तु । विलम्बः कृतः चेत् पुनरपि केचन सैनिकाः तैः सम्मिलेयुः'' इति उक्त्वा स्वकीयम् अश्वं शत्रूणां दिशि प्रेरितवान् ।

स्वसमीपम् आगच्छन्तौ चन्द्रवर्माणं सुबाहुं च दृष्ट्वा ते त्रयः सैनिकाः भीताः । अश्वं परावृत्य नगरस्य दिशि धावितवन्तः च । चन्द्रवर्मा स्वकीयम् अश्वं प्रेरितवान् । यजमानस्य इङ्गितं ज्ञातवान् इव अश्वः वेगेन अधावत् ।

शत्रुसैनिकाः अपि पुनः पुनः अश्वं प्रेरयन्तः अग्रे धावन्ति स्म ।

शत्रुसैनिकान् अनुसृत्य सुबाहुः चन्द्रवर्मा च बहुदूरं गतवन्तौ । अत्रान्तरे ताभ्यां दृष्टं यत् नगरतः अन्ये केचन अश्वारोहिणः एतयोः अभिमुखम् आगच्छन्तः सन्ति । तान् दृष्ट्वा तत्क्षणे एव अश्वं पृष्ठतः परिवर्त्य प्रेरयन् चन्द्रवर्मा उक्तवान्- ''सुबाहो ! शत्रूणां तन्त्रं ज्ञातम् इदानीम् । ते तन्त्रेण आवां नगरसमीपम् आनीतवन्तौ । त्वरया अश्वं विरुद्धदिशि प्रेरयतु । विना विलम्बेन इतः पलायनं करणीयम् । अन्यथा शत्रुसैनिकैः आवाम् आक्रान्तौ भवावः'' इति ।



सुबाहुः अपि अश्वं पृष्ठतः परिवर्त्य प्रेरितवान् । उभौ अपि वेगेन प्रस्थितौ । क्षणे क्षणे शत्रूणाम् एतयोः च मध्ये अन्तरं न्यूनीभवति स्म ।

''युवराज ! इदानीम् आवयोः परिस्थितिः वस्तुतः शोचनीयताम् आपन्ना'' इति उद्वेगेन उक्तवान् सुबाहुः ।

चन्द्रवर्मा किमपि न उत्तरितवान् । सः गच्छन् एव 'विना वचनं माम् अनुसरतु' इति हस्तसङ्केतेन सूचितवान् ।

शत्रुसैनिकानां निरन्तरम् अनुसरणम् आसीत् एव । अग्रे गत्वा ताभ्यां दृष्टं यत् पुरतः दुस्तरः पर्वत-मार्गः उपस्थितः अस्ति इति । तयोः अश्वौ तु निरन्तरं धावनेन श्रान्तौ ।

चन्द्रवर्मा स्पष्टं ज्ञातवान् यत् इतः परं एतौ अश्वौ आवां बहुदूरं नेतुं न समर्थौ इति। सः शत्रुसैनिकान् दृष्टवान्। तेषाम् अश्वाः अपि श्रान्ताः सन्ति। अश्वानां मुखतः लालाजनितः फेनः दृश्यते। शत्रूणाम् एतयोः च मध्ये केवलम् अर्धक्रोशात्मकम् अन्तरम् आसीत्।

''सुबाहो! इतः परं अश्वयोः उपरि विश्वासः न उचितः। यस्मिन् कस्मिन् अपि क्षणे अग्रे गन्तुम् अशक्तयोः एतयोः पतनं भवेत्। अतः इदानीं आवयोः पादाः एव शरणम्। अवतरतु तावत्। यावत् शक्यं तावत् वेगेन गच्छावः'' इति उक्त्वा चन्द्रवर्मा अश्वात् अवतीर्य धावितुम् आरब्धवान्। सुबाहुः तम् अनुसृतवान्।

शत्रवः अपि अश्वात् अवतीर्य उच्चैः कोलाहलं कुर्वन्तः एतौ अनुसृत्य धावितवन्तः।

इदानीम् पर्वतस्य अधोमुखः मार्गः उपस्थितः आसीत्। अतः चन्द्रवर्मा सुबाहुः च शिलानां वृक्षशाखानाम् च आधारेण अग्रे धावितवन्तौ। किञ्चिदिव पादः स्खलति चेत् अपि मरणं निश्चितम् आसीत्।

शत्रुसैनिकेषु दशद्वादशजनाः वेगेन धावन्तः समीपम् आगच्छन्तः आसन्।

अग्रे धावनं क्लेशकरम् इति ज्ञात्वा शत्रुसैनिकेषु एकः- ''एतयोः अनुसरणेन अस्माकं एव मरणं भवेत्। पादः किञ्चिदिव स्खलति चेत् वयं पार्श्वस्थितायां नद्यां पतामः एव। अतः वयम् अत्र एव स्थित्वा इतः शिलाः प्रेरयामः'' इति उक्तवान्।

शत्रुभिः प्रेरिताः महाशिलाः सुबाहु-चन्द्रवर्मणोः दिशि लुठन्त्यः आगच्छन्ति स्म।

भाग्यवशात् उभौ अपि सुरक्षिततया समतल-प्रदेशं प्राप्तवन्तौ। चन्द्रवर्मा सुबाहुम् पृष्टवान्- ''इदानीं अग्रे गन्तुं कोऽपि मार्गः नास्ति। भवान् तु तरणं जानाति किल?'' इति। अनन्तरं पार्श्वे प्रवहन्त्यां नद्यां उत्पतितवान् च।

(अनुवर्तते)






# कविस्पर्धा

दृढव्रती त्रिविक्रमः वृक्षस्य समीपं प्रत्यागतवान्। वृक्षम् आरुह्य शवम् अधः आनीतवान्। तं शवं स्कन्धे आरोप्य श्मशानाभिमुखं प्रस्थितः च। तदा शवान्तर्गतः वेतालः अवदत्- ''राजन्! श्रमसाध्ये अस्मिन् कार्ये भवन्तं कः प्रेरितवान् इति अहं न जानामि। कार्यं सफलं चेत् कीदृशं प्रतिफलं भवता प्राप्येत इत्यपि अहं न जानामि। भवान् सम्पत्तिम् इच्छति उत कीर्तिम्? अथवा उभयम् अपि इच्छति किम्? एकः एव उभयम अपि प्राप्तुं न शक्नोति किल? अतः विवेकशीलाः अनयोः एकं प्राप्तुं स्वकीयायाः सर्वशक्तेः उपयोगं कुर्वन्ति। अन्यथा तैः अवहेलनं प्राप्तव्यं भवेत्। अत्र उदाहरणरूपेण पण्डितयोः कथां वदामि। श्रमनिवारणार्थं श्रृणोतु तावत्'' इति।

अनन्तरं वेतालेन कथा आरब्धा–

# वेतालकथा



पूर्वं प्रसन्नः नाम कविः आसीत्। सः स्वकविताबलेन राजाश्रयं प्राप्तुम् इच्छन् पाटलीपुत्रं प्राप्तवान्। तेषु दिनेषु महासारः नाम महाराजः पाटलीपुत्रं पालयति स्म। सः विशेषतः साहित्यप्रियः। एषः राजा प्रतिभां पुरस्कुर्वन् पुरस्काराणि अपि ददाति स्म। अतः तदीया कीर्तिः सुदूरं व्याप्ता आसीत्।

महाराजस्य दर्शनं प्राप्तुं प्रसन्नः प्रयत्नं कृतवान्। किन्तु राजभटानां दर्पकारणतः तदीयः प्रयत्नः विफलः जातः।

प्रसन्नस्य स्नेहितः कश्चन वज्रवणिक् आसीत्। तस्य समीपे एषः स्वकीयां परिस्थितिं निवेदितवान्।

वज्रवणिक् प्रसन्नस्य व्यथां श्रुत्वा उक्तवान्- "कविवर ! अहं केवलं वज्रपरीक्षकः। वज्रस्य मूल्यादिकं ज्ञातुं शक्नोमि। किन्तु कवितायाः योग्यतां अर्थं गाम्भीर्यं वा ज्ञातुम् असमर्थः। राजदर्शनं कारयितुम् अपि सामर्थ्यं नास्ति। अतः भवान् द्वाररक्षकाणां हस्ते धनं दत्त्वा प्रयत्नं करोतु। उत्कोचं सर्वकार्यसाधकं किल ? अतः प्रयत्नं कृत्वा पश्यतु" इति।

वज्रवणिजः वचनानि श्रुत्वा कविः भावाविष्टः अभवत्। सः तत्क्षणे आशुकविताम् एकां श्रावितवान्। तस्य भावार्थः आसीत् यत् यस्य दर्शनार्थं द्वारपालकेभ्यः उत्कोचः दातव्यः भवति, तादृशमहाराजस्य दर्शनं न कृतं चेत् का हानिः ? इति।

वज्रवणिक् एतस्याः कवितायाः भावार्थं सम्यक् न गृहीतवान्। किन्तु तस्मिन् एव समये आपणं प्रविष्टः देवीदासः तां कवितां श्रुतवान्। देवीदासः महाराजस्य आस्थाने आस्थानकविः। 'देवीदासस्य जिह्वायां सरस्वती नृत्यति' इति जनानां भावना आसीत्। देवीदासस्य काव्यानि पण्डितानां पामराणां च तोषदायकानि आसन्।

देवीदासं दृष्ट्वा सन्तोषं प्रकटयन् रत्नवणिक् स्वागतं कृतवान्। देवीदासः 'मम परिचयं न वदतु' इति हस्तसङ्केतेन सूचयन् प्रसन्नम् उक्तवान्- "भवान् तु महाकविः इव भाति। राजदर्शनार्थं महान् श्रमः कृतः इत्यपि

ज्ञायते । वस्तुतः भवता राजदर्शनार्थं द्वारपालाः न आश्रयणीयाः, अपि तु आस्थानिकाः कवयः आश्रयणीयाः'' इति ।

एतस्याः सूचनायाः उत्तररूपेण प्रसन्नः पुनः एकं श्लोकम् उक्तवान् । तस्य भावः तु- ''प्रसन्नस्य पाण्डित्येन प्रभावितः राजा 'अद्यावधि मया नीरसकविताः एव श्रुताः' इति चिन्तयित्वा अस्मान् निष्कास्य प्रसन्नम् एव आस्थाने नियोजयेत् इति एतया आशङ्कया भीताः आस्थानकवयः मह्यं राजदर्शनस्य अवकाशं न कल्पयन्ति । अतः एतादृशकवीनाम् आश्रयणम् अपि न लाभाय'' इति ।



देवीदासः सन्तोषेण करताडनं कृत्वा उक्तवान्- ''वस्तुतः भवतः कविताशक्तिः असाधारणी । किन्तु महासारस्य आस्थान-कवीनां विषये भवतः यः अभिप्रायः अस्ति स च दोषपूर्णः । अहं स्वयं महाराजाय भवतः परिचयं कारयामि'' इति । अनन्तरं स्वकीयं परिचयम् उक्तवान् च ।

प्रसन्नः देवीदासस्य परिचयं प्राप्य किञ्चित् भीतः । सः उक्तवान्- ''महानुभाव ! 'भवान् माहकविः' इति अज्ञात्वा अहं किमपि किमपि जल्पितवान् । भवतः कीर्तिः मया श्रुता । भवदीयकाव्यानि पठितुम् अपि मम कश्चन अवकाशः प्राप्तः आसीत् । वस्तुतः भवतः विषये मम गुरुभावः अस्ति । भाग्यवशात् एव अहं भवतः दर्शनावकाशं प्राप्तवान् । एतेन अहं वस्तुतः आत्मानं धन्यं मन्ये । भवतः पुरतः मया यः अनुचितः व्यवहारः प्रदर्शितः तदर्थं क्षमां याचे'' इति ।

''अतिशयोक्तिः अपि काव्यस्य कश्चन अलङ्कारः एव किल ?'' इति वदन् देवीदासः प्रसन्नम् आत्मना सह महासारस्य समीपं नीतवान् । 'एतस्य परिचयः कथं जातः' इति प्रसङ्गम् अपि महाराजाय निवेदितवान् ।

एतेन सन्तुष्टः महासारः- ''कविवर ! भवान् महाकविना देवीदासेन प्रशंसितः अस्ति । अतः भवतः प्रतिभाविषये मम संशयः एव नास्ति'' इति उक्त्वा तस्मै स्वकीये आस्थाने महाकवित्वेन आश्रयं दत्तवान् ।

तत्क्षणे एव देवीदासं प्रसन्नं च स्वसमीपम् आहूय विषयं निवेदितवान् च।

तदा प्रसन्नः उक्तवान्- "महाराज! भवतः विचारः उचितः एव। सामान्याः जनाः यथा वेदतत्त्वं जानीयुः तथा सरलया शैल्या ग्रन्थः रचनीयः चेत् प्रथमं अस्माभिः तत् तत्त्वं आमूलाग्रं ज्ञातव्यं भविष्यति। तदर्थं समर्थैः सह चर्चा करणीया। विचारविमर्शः करणीयः। तदनन्तरम् एव काव्यरचनार्थं प्रयत्नः करणीयः। एवं च एतत् कार्यं त्वरया न सिध्यति" इति।

देवीदासः महाराजम् उक्तवान्- "अस्मिन् कार्ये मम कस्यापि साहाय्यं न अपेक्षितम्। अहम् एकाकी एव एतत् समर्थतया निर्वोढुं समर्थः। मासद्वये अहम् एतत् कार्यं समापयितुं शक्नोमि" इति।

राजकार्यस्य दायित्वम् उभयोः कृते अपि समर्पयन् महासारः उक्तवान्- "भवतोः यः एतत्कार्यं प्रथमं कृत्वा प्रदर्शयति तस्मै अहं लक्षरूप्यकात्मकं पारितोषिकं दास्यामि" इति।

उभौ अपि एतत् कार्यम् आरब्धवन्तौ। देवीदासः तु संस्कृते समर्थः। कठिनातिकठिनं तत्त्वम् अपि सः विनायासं ज्ञातुं शक्नोति स्म। अतः सः निश्चितावधितः सप्ताहद्वयपूर्वम् एव स्वकीयं कार्यं समापितवान्।

प्रसन्नः तु संस्कृतं सम्यक् एव जानाति स्म, किन्तु तत्र तस्य विशेषपाण्डित्यं न आसीत्। वेदान्तविचारः तु तेन न ज्ञातः आसीत्। अतः सः पण्डितानां साहाय्येन वेदतत्त्वं जानाति



प्रसन्नः स्वप्रतिभाशक्त्या अल्पे एव काले राजास्थाने प्रसिद्धः अभवत्। लोके एतदपि प्रसिद्धम् अभवत् यत् देवीदासस्य समकक्षः कश्चित् अस्ति तर्हि सः प्रसन्नः एव इति।

एवं स्थिते कदाचित् महासारस्य राज्ये क्षुल्लककारणेन मतीयकलहः आरब्धः। जनाः आत्मनं वैष्णवं, बौद्धं, जैनं वा मानयन्तः परस्परकलहे प्रवृत्ताः। कालान्तरे एषः कलहः हिंसारूपम् आपन्नः। राजा महासारः जनानां मनस्सु परिवर्तनम् आनेतुं बहु प्रयत्नं कृतवान्। किन्तु तेन किमपि प्रयोजनं न सिद्धम्।

तदा महासारस्य मन्त्री राजानम् उक्तवान्- "महाराज! श्रेष्ठसाहित्येन जनानां मनस्सु परिवर्तनम् आनेतुं शक्यम्। 'देवः एकः' इति वेदः घण्टाघोषं कथयति। वेदविषये सर्वेषां गौरवभावः अस्ति एव। अतः वेदस्य सारं समायोज्य सरलया शैल्या कश्चन ग्रन्थः निर्मातव्यः। तेन निश्चयेन जनानां मनस्सु परिवर्तनं भविष्यति" इति।

मन्त्रिणः एषा सूचना महाराजस्य अपि इष्टा जाता। अस्मिन् कार्ये केवलं देवीदासः एव समर्थः इति राजा उक्तवान्। तदा मन्त्री निवेदितवान्- "वेदस्य तत्त्वं सरलया शैल्या काव्ये प्रस्तुतीकर्तुम् एकः एव अपर्याप्तः भवेत्। मया श्रुतं यत् प्रसन्नः अपि देवीदासः इव समर्थः इति। अतः एतत् कार्यभारम् उभयोः दानम् उचितम्" इति।

महासारः मन्त्रिणः वचनम् अङ्गीकृतवान्।





स्म। तदनन्तरं तत् सरल्या काव्यशैल्या लिखति स्म।

देवीदासः अन्यजनद्वारा प्रसन्नस्य काव्य-रचनाविषये तदा तदा वार्ता प्राप्नोति स्म। 'प्रसन्नस्य अपेक्षया सप्ताहद्वयं पूर्वम् एव काव्य-रचनाकार्यं समापितम्' इत्येतत् देवीदासस्य दृष्ट्या गौणम् आसीत्। किन्तु 'देवीदासः श्रेष्ठः कविः, प्रसन्नः देवीदासस्य समकक्षतां प्राप्तुं न अर्हति इति जनाः यथा वेदयुः तथा करणीयम्' इति भावना देवीदासस्य मनसि सर्वदा भ्रमति स्म।

एतां भावनां सफलयितुम् इच्छन् देवीदासः प्रसन्नस्य कार्यसमाप्तेः अनन्तरं तेन सह राजास्थानं गत्वा उक्तवान्- "महाराज! मया प्रसन्नेन च प्रायः एककाले एव काव्यरचना आरब्धा। आवयोः काव्ययोः किं काव्यं श्रेष्ठम् इति भवान् एव निर्णयं करोतु। उत्तमः कविः पारितोषिकं प्राप्नोतु" इति।

उत्तमकाव्यस्य निर्णये इदानीं महाराजस्य पुरतः महती समस्या उत्पन्ना। इतः पूर्वं सः काव्यस्य सारासारतानिर्णये देवीदासस्य साहाय्यं स्वीकरोति स्म। इदानीं सः देवीदासः एव स्पर्धालुः! तर्हि अत्र कः निर्णायकः भवेत्?

अस्मिन् एव सन्दर्भे सुदैववशात् चिरञ्जीवी नाम सकलविद्यापारङ्गतः श्रेष्ठः पण्डितः देशाटनं कुर्वन् पाटलीपुत्रम् आगतवान्। महासारः आदरपूर्वकं तस्य सत्कारं कृतवान्। आत्मनः पुरतः आगतां कठिनसमस्यां निवेद्य- 'एतयोः उत्तमं काव्यं किम् इति भवता एव निर्णयः करणीयः' इति प्रार्थितवान् च।

चिरञ्जीवी द्वयोः अपि काव्ययोः परिशीलनं कृत्वा स्वकीयम् अभिप्रायं प्रकटितवान्- "काव्य-द्वयम् अपि समानं श्रेष्ठं च। अतः द्वयोः अपि पुरस्कारदानम् उचितम्" इति।

एतत् श्रुत्वा असन्तुष्टः देवीदासः उक्त-वान्- "मदीयं काव्यं मम एव प्रतिभायाः प्रसूतिः। प्रसन्नस्य अपेक्षया अहं सप्ताहद्वयं पूर्वम् एव काव्यरचनां समापितवान्। तथापि प्रसन्नस्य काव्यस्य समाप्तिं प्रतीक्षमाणः इदा-नीम् मदीयं काव्यम् आनीतवान्। प्रसन्नस्य

काव्यं सम्पूर्णतया स्वतन्त्रं न। बहूनां पण्डिता-नाम् अभिप्रायं सङ्गृह्य सः काव्यं लिखित-वान्। अतः पारितोषिकघोषणातः पूर्वं पूर्वोक्ताः सर्वे विषयाः मनसि स्थापनीयाः'' इति।

तदा चिरञ्जीवी विस्मयपूर्वकं पृष्टवान्- ''भवान् एकाकी एव एतावति अल्पे समये, वेदस्य सारं काव्ये समायोजितवान् वा? एतत् अहं विश्वसितुम् एव न शक्नोमि'' इति।

तदा देवीदासः गर्वेण उक्तवान्- ''अहं इतोऽपि अद्भुतानि कार्याणि कृतवान् अस्मि। एकवर्षात्मके अवधौ महाभारतस्य अनुवादः मया कृतः। वर्षद्वये अष्टादशपुराणानाम् अनुवादः समापितः'' इति।

''देवीदासेन यत् उच्यते तत् सत्यम्'' इति उक्तवान् महासारः। ''एवं तर्हि सप्ताहद्वतः पूर्वम् एव काव्यरचना समाप्ता चेत् तदानीम् एव किमर्थं वा काव्यं महाराजसमीपं न आनीतम्? किमर्थं तदानीम् एव पुरस्कारं प्राप्तुं प्रयत्नः न कृतः?'' इति पृष्टवान् चिरञ्जीवी।

''काव्यलक्षणज्ञः यः कोऽपि प्रसन्नस्य मम च काव्ययोः मध्ये विद्यमानं सूक्ष्मं भेदं जानाति एव। शीघ्रं समापितम् इति कारणेन अहं पुरस्कारं प्राप्तुं न इच्छामि। श्रेष्ठता-कारणतः एव तत् प्राप्तं भवतु इति मम विचारः'' इति उक्तवान् देवीदासः।

''प्रसन्न भवान् किं वदति एतद्विषये?''



पृष्टवान् महासारः।

''महानुभाव! देवीदासस्य पाण्डित्यं यावत् अस्ति तावत् मम नास्ति। सर्वदा सः मम गुरुतुल्यः एव। अहं पारितोषिकस्य आशया ग्रन्थं न लिखितवान्। जनहितं मनसि संस्थाप्य जनोपकारार्थं काव्यं लिखितवान्। 'मदीयं काव्यं देवीदासकाव्येन समानम्' इति भवन्तः यत् वदन्ति तेन आश्चर्यचकितः अस्मि अहम्। काव्यक्षेत्रे इदानीम् अपि बालः अहं कथं वा देवीदाससमकक्षतां प्राप्तुं शक्नोमि?'' इति विनयेन उक्तवान् प्रसन्नः।

तदा चिरञ्जीवी उक्तवान्- ''प्रसन्नः एव पुरस्कारयोग्यः। अतः तस्मै एव पुरस्कारः दातव्यः'' इति। राजा चिरञ्जीविवचनम्

अङ्गीकृत्य प्रसन्नाय पारितोषिकं दत्तवान्।

एवं कथां समाप्य वेतालः अवदत्- "राजन्! चिरञ्जीविवचनानुसारं महासारः प्रसन्नाय पारितोषिकं यत् दत्तवान् तेन महापण्डितस्य देवीदासस्य विषये अन्याय्यम् अनुष्ठितम् इति भाति। चिरञ्जीवी किमर्थं वा पक्षपातम् आचरितवान्? देवीदासस्य अपेक्षया न्यूनपाण्डित्यवते प्रसन्नाय किमर्थं पारितोषिकं दापितवान्? एतयोः प्रश्नयोः उत्तरं जानन् अपि यदि भवान् न वदति तर्हि भवतः शिरः सहस्रधा छिन्नं भविष्यति"

तदा त्रिविक्रमः उक्तवान्- "देवीदासः श्रेष्ठः कविः इत्यत्र सन्देहः एव नास्ति। किन्तु प्रसन्नः अपि देवीदासकाव्यसमकक्षं काव्यं रचयित्वा स्वकीयां योग्यतां प्रमाणीकृतवान्। अतः उभौ अपि समानौ इति तु सिद्धम्। 'प्रसन्नाय किमर्थं दत्तम्' इति प्रश्नः उत्पद्येत। उभयोः अपि पण्डितयोः व्यवहारस्य परिशीलनेन एतस्य उत्तरं लभ्यते। देवीदासः आत्मप्रशंसातत्परः। 'मत्समः अन्यः कोऽपि नास्ति' इति भावः तस्य वचनेषु स्फुटं प्रतीयते। मम काव्यम् एव पुरस्कारार्हम् इति सः साग्रहं प्रतिपादयति। एतेन ज्ञायते यत् कीर्तिकामनया सह धनकामना अपि तस्य अस्ति इति। एतत्सर्वं पतनसूचकम्।

प्रसन्नः तु विनीतः। 'पारितोषिकं प्राप्तव्यम् एव' इति दुराग्रहः अपि तस्य नास्ति। धनविषये सः निर्लिप्तः अपि। अतः एषः कालान्तरे उन्नतिं प्राप्तुम् अर्हति। प्रतिभायां समानायाम् अपि यः उन्नतिं प्राप्तुम् अर्हति तस्मै एव पारितोषिकदानम् उचितं किल? यः पतनमार्गे अस्ति तस्मै पारितोषिकदानेन किं वा प्रयोजनम्? एतत्सर्वं पर्यालोच्य एव चिरञ्जीवी स्वकीयं निर्णयं घोषितवान्। अतः चिरञ्जीवी न पक्षपाती, अपि तु विवेकी"

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत्। अतः शवसहितः वेतालः अदृश्यः भूत्वा वृक्षस्य शाखाम् अवलम्बितवान्।





# स्वार्थाय सहनम्

कस्मिंश्चित् नगरे रमानन्दः चन्द्रकान्तः च इति गृहस्थौ आस्ताम्। तयोः मध्ये परस्परं गाढमैत्री आसीत्। अपरिचिताः तौ भ्रातरौ इत्येव भावयन्ति स्म।

चन्द्रकान्तस्य स्वभावः विलक्षणः। सः विनाकारणं सहसा विवादम् आरभते। अत्यल्पविषयाणां कृते उग्ररूपं कलहं करोति च।

एकदा चन्द्रकान्तस्य गृहे एकः महान् समारम्भः प्रकल्पितः। अनेके नगरवासिनः आमन्त्रिताः। तेषु एकः विश्वम्भरः। सः अपि चन्द्रकान्तसदृशः विलक्षणस्वभाववान् आसीत्। वार्तालापसमये सः निर्दाक्षिण्यं स्वेच्छया वदति स्म। क्षिप्रकारी विश्वम्भरः इत्येव तस्य उपनाम।

वार्तालापमध्ये विश्वम्भरः चन्द्रकान्तं पृष्टवान्- "किं भोः, अस्मिन् वर्षे महतीं फलसमृद्धिं लब्धवान् इति मन्ये। अतः एव एतादृशं महान्तं समारम्भं कुर्वन् अस्ति। सत्यं खलु?" इति।

"तथा किमपि न। मम कृषिक्षेत्राणाम् उपरि कस्य अपि दुष्टस्य कुत्सितः दृष्टिपातः न भवतु इति दृष्ट्या सर्वान् आहूय एतादृशं समारम्भं कुर्वन् अस्मि" इति झटिति उक्तवान् चन्द्रकान्तः।

"अहो! कुदृष्टिपरिहारार्थं वा? केषाञ्चन पापिजनानां दृष्टिप्रभावः महान् उग्रः भवति। एतेन एव कारणेन मम क्षेत्रे प्रायः पर्याप्तं फलं न लभ्यते इति भाति। भवतः सर्वान् आहूय मया अपि एतादृशः समारम्भः करणीयः" इति उक्तवान् विश्वम्भरः।

"सत्यं सत्यं भोः, मार्गस्य पार्श्वे एव भवतः क्षेत्राणि सन्ति। अहम् अपि प्रतिदिनं तेन मार्गेण गमनागमनं करोमि। मम एव दृष्टिः कुत्सिता इति खलु भवतः अभिप्रायः?"

"माणवकः"



इति क्रोधेन पृष्टवान् चन्द्रकान्तः ।

"अहं कदा तथा उक्तवान् भोः ? भवान् एव प्रथमतया समारम्भे आगतानां दृष्टिः कुत्सिता इति उक्तवान्" इति विश्वम्भरः गर्जितवान् ।

एवंरीत्या तयोः वादविवादः क्रमेण तीक्ष्णा जाता । सर्वे अतिथिजनाः आगत्य परितः सम्मिलिताः । एतं कोलाहलं दृष्ट्वा रमानन्दः धावन् तत्र आगतवान् । सः वास्तविकं वृत्तान्तं ज्ञात्वा- "एतावदेव वा ? ये अन्धाः न भवन्ति, ते सर्वे पुरतः विद्यमानानि वस्तूनि पश्यन्ति एव । तत्र कः विशेषः ? अल्पस्य कृते एतादृशः कोलाहलः शोभते वा ? भोः भ्रातः चन्द्रकान्त ! एतत भवतः गृहम् । विश्वम्भरः भवतः अतिथिः । तस्य आदर-पूर्वकः सत्कारः भवता करणीयः । यदि वार्तालापमध्ये यत् किमपि वैमनस्यं जायते, तर्हि तत् तत्रैव परिहरणीयम्" इत्यादिवचनैः द्वौ अपि समाश्वासितवान् ।

अनन्तरं समारम्भः समीचीनतया प्रवृत्तः । तस्य समाप्त्यनन्तरं सर्वे प्रतिनिवृत्ताः । किन्तु ततःपरं चन्द्रकान्तः रमानन्देन सह वार्तालापम् एव त्यक्तवान् ।

एतेन रमानन्दः अतीव खिन्नः अभवत् । मया कः अपराधः कृतः इति सः पुनः पुनः चिन्तितवान् । उत्तरं न लब्धम् । तदा सः साक्षात् चन्द्रकान्तस्य गृहं गतवान् । तत्र तस्य पत्नीं दृष्ट्वा- "किं भोः भगिनि, किम् इदं चित्रम् । यदा यदा चन्द्रकान्तः मां पश्यति, तदा झटिति मुखं परावृत्य अन्यत्र गच्छति । सः किमर्थम् एवं करोति ?" इति तां पृष्टवान् ।

"भवतः उपरि तस्य तीव्रः कोपः अस्ति बन्धुमित्राणां पुरतः तस्य दोषं प्रदर्श्य भवान् हितवचनानि उक्तवान् किल ? तेन जातम् अपमानं यावज्जीवं न विस्मरामि इति वदति" इति सा उक्तवती ।

"अहो ! बाल्यात् आरभ्य आवयोः मध्ये एतादृशी मैत्री अस्ति । यदि मम वचनं तस्मै न रोचते, तर्हि मम मैत्र्याः एव त्यागः उचितः वा ?" इति उक्तवान् चन्द्रकान्तः ।



"तस्य स्वभावं भवान् जानाति एव। भवादृशस्य सज्जनस्य स्नेहं त्यक्तुम् अहम् अपि न इच्छामि। अतः या कापि युक्तिः चिन्तनीया" इति चन्द्रकान्तपत्नी उक्तवती।

किञ्चित्कालानन्तरं चन्द्रकान्तस्य सप्तवर्षीयः पुत्रः केनचित रोगेण पीडितः अभवत्। केनापि औषधेन रोगनिवारणं न जातम्। रमानन्दः वैद्यशास्त्रं किञ्चित् जानाति स्म। इतः पूर्वम् सः एव चन्द्रकान्तस्य कुटुम्बवैद्यः आसीत्। किन्तु इदानीं तस्य साहाय्यं चन्द्रकान्तः न इच्छति। एतं विषयम् अजानन्तः तस्य प्रातिवेशिकाः उक्तवन्तः- "औषधार्थम् अन्यत्र किमर्थं गच्छति? रमानन्दम् आनयतु। सः समीचीनम् औषधं ददाति" इति।

अस्मिन् सन्दर्भे संन्यासी कश्चित् चन्द्रकान्तस्य गृहम् आगतवान्। चन्द्रकान्तः तं पुत्रस्य समीपं नीत्वा पुत्रस्य रोगविचारं निवेदितवान्। संन्यासी बालस्य शरीरं परीक्ष्य चन्द्रकान्तं- "भवान् परमस्वार्थी अस्ति। भवतः किञ्चिदपि सहना नास्ति। आप्तमित्राणां हितवचनानि अपि भवते न रोचन्ते। भवतः एते सर्वे दुर्गुणाः रोगरूपं धृत्वा भवतः पुत्रं पीडयन्तः सन्ति। एतस्य रोगस्य निवारणं सामान्येन औषधेन न भवति" इति उक्तवान्।

तस्य वचनं श्रुत्वा चन्द्रकान्तः- "भोः स्वामिन्, मद्विषये केनापि उक्तम् असत्यवचनं भवता श्रुतं स्यात्। मयि तु महती सहनशीलता अस्ति। मम पुत्रस्य कृते यत् किमपि कर्तुम् अहं सिद्धः अस्मि। इदानीं कृपया भवता एव मम पुत्रस्य रोगनिवारणोपायः सूचनीयः" इति याचितवान्।

"एवं तर्हि शृणोतु। इतः क्रोशद्वयपरिमिते दूरे श्रीमतः मल्लिकार्जुनस्वामिनः देवालयः अस्ति किल? तत्र भवान् एकाकी एव पादाभ्यां गच्छतु। भगवतः दर्शनं कृत्वा पुनः पादाभ्याम् एव प्रत्यागच्छतु। इदानीम् अहं किञ्चित् औषधम् अपि ददामि। तत् भगवतः सन्निधाने संस्थाप्य प्रार्थनां करोतु। तदेव प्रसादरूपम् औषधम् भवतः पुत्रस्य रोगं परि-



हरति। भवतः प्रत्यागमनपर्यन्तम् अहम् अत्रैव प्रतीक्षां करोमि। मार्गे कुत्रापि विश्रान्तिः न स्वीकरणीया। जलम् अपि न पातव्यम्'' इति उक्तवान् संन्यासी।

''तथैव करिष्यामि स्वामिन्!'' इति अङ्गीकृतवान् चन्द्रकान्तः।

''तावद्दूरं गमनं, पुनः प्रत्यागमनं नाम अतीव क्लेशपूर्णं कार्यम्। तथापि मार्गमध्ये आयासेन ''हा! हन्त'' इत्यादिरूपाणि प्रलापवचनानि न वक्तव्यानि। भगवतः दर्शनसमनन्तरम् एव साक्षात् पादाभ्यां प्रत्यागन्तव्यम्। ज्ञातं खलु?'' इति पुनः उक्तवान् संन्यासी।

एतेन पादयात्रायाः महत्त्वं चन्द्रकान्तः स्पष्टतया ज्ञातवान्। सः संन्यासिना दत्तं मन्त्रपूतम् औषधं गृहीत्वा श्रीमतः मल्लिकार्जुनस्वामिनः देवालयं प्रति प्रस्थितः। मध्याह्ने गृहात् प्रस्थितः सः सायङ्काले प्रत्यागतवान्।

संन्यासी चन्द्रकान्तं दृष्ट्वा- ''एतावच्छीघ्रं कथं प्रत्यागतवान्? देवालयपर्यन्तं गतवान् वा न वा?'' इति पृष्टवान्।

''मम पुत्रस्य रक्षणार्थं शीघ्रं शीघ्रं गत्वा आगतवान्'' इति उक्तवान् चन्द्रकान्तः।

''कुत्रापि कस्य उपरि अपि किमपि दोषारोपणं न कृतं किल? कस्य अपि विषये क्रोधः न प्रदर्शितः किल?'' इति पृष्टवान् संन्यासी।

''सर्वथा न। इदानीम् एतत् औषधं पुत्राय ददामि वा?'' इति पृष्टवान् चन्द्रकान्तः।

तदा सः संन्यासी सहसा गाम्भीर्यम् अवलम्ब्य ''न शक्यते। एतेन औषधेन भवतः पुत्रस्य किमपि प्रयोजनं नास्ति। भवान् महास्वार्थपरः। यावत्पर्यन्तं भवान् स्वार्थगुणं न त्यजति, तावत्पर्यन्तं भवतः पुत्रस्य रोगपरिहारः न भवति'' इति उक्तवान्।

''किमिदं भोः! मम पुत्रार्थम् एतावति अल्पकाले क्रोशचतुष्टयपरिमितं दूरं पादाभ्याम् एव आगतवान् अस्मि। एतादृशः अहं कथं स्वार्थपरः भवामि? स्वार्थपरस्य एतादृशी सहन-

शीलता भवति वा ?" इति पृष्टवान् चन्द्रकान्तः।

सः संन्यासी गम्भीरस्वरेण–"यदि भवति निश्चयेन एतावती सहनशीलता अस्ति, तर्हि अन्यैः सह व्यवहारसमये अपि एतादृशः गुणः किमर्थं न अवलम्ब्यते ? तस्य कारणम् एवम् अस्ति यत् इदानीं भवता प्रदर्शिता सहनशीलता केवलं स्वार्थमूला एव। केवलं शिलाविग्रहे भवतः विश्वासः। तम् अवलम्ब्य स्वार्थसाधनाय एतावान् परिश्रमः तथा सहनादिगुणाः च प्रदर्शिताः। साक्षात् मानवानां विषये भवान् एतादृशव्यवहारं प्रदर्शयति वा ? नैव। किमर्थं तथा करोति ?" इति पृष्टवान्।

"किमर्थम् एषः मिथ्यारोपः ? सर्वेषाम् विषये अहम् एवमेव व्यवहरामि। कश्चित् असूयापरः एव मम विषये एतत् असत्यम् उक्तवान् इति मन्ये" इति उक्तवान् चन्द्रकान्तः।

"यदि भवतः वचनं यथार्थम् अस्ति, तर्हि अहं वृथा भवता परिश्रमं कारितवान् अस्मि" इति सहजस्वरेण वदन्, संन्यासिवेषधारी रमानन्दः जटाजूटादिकं निष्कासितवान्।

चन्द्रकान्तः आश्चर्येण तं पश्यन् "किं भोः, भवान् रमानन्दः ! अहो ! किमिदं सर्वम् !" इति पृष्टवान्।

"भोः भ्रातः चन्द्रकान्त, एतस्याः भ्रातृजायायाः सहकारेण आवयोः स्नेहं दृढीकर्तुम् अहम् एतत् कपटनाटकं प्रकल्पितवान्। भवतः पुत्रस्य न कोऽपि रोगः अस्ति। अहम् अपि कृतकवेषं धृत्वा कपटाभिनयं कृतवान्। भवतः मैत्रीं त्यक्तुम् अहं सुतरां न इच्छामि" इति रमानन्दः हसन् उक्तवान्।

चन्द्रकान्तः स्वीय दोषं ज्ञातवान्। "मम उपरि भवतः कीदृशी प्रीतिः अस्ति इति इदानीम् अहं ज्ञातवान्। इतः परं कदापि एतादृशं दोषं न करोमि। सर्वेषाम् अपि विषये स्वार्थरहितस्नेहेन व्यवहरामि" इति सः उक्तवान्।

अनन्तरं तौ स्नेहितौ परस्परं भ्रातरौ इव व्यवहरन्तौ सन्तोषेण कालं यापितवन्तौ।






# मद्यपानफलम्

यदा ब्रह्मदत्तः काशीराज्यं पालयति स्म, तदा बोधिसत्त्वः एकस्मिन् ब्राह्मणकुटुम्बे जन्म प्राप्तवान्। तस्य पूर्वजाः सर्वे प्रसिद्धाः पण्डिताः आसन्। बोधिसत्त्वः अपि बाल्यतः आरभ्य अध्ययने अत्यासक्तः आसीत्। अध्ययनं कुर्वन् यदा विंशतिवर्षीयः जातः, तदा सः सकलशास्त्रेषु पारङ्गतः, सर्वत्र प्रख्यातः च अभवत्।

प्रबुद्धं प्राप्तवयस्कं च पुत्रं दृष्ट्वा मातापितरौ तस्य विवाहः करणीयः इति चिन्तितवन्तौ। किन्तु बोधिसत्त्वः विवाहं निराकृत्य 'अहं परिव्राजकः भविष्यामि' इति उक्तवान्। तथैव सः संन्यासं स्वीकृत्य हिमालयं गतवान् च। तत्र एकस्मिन् मनोहरप्रदेशे आश्रमं निर्माय तत्रैव वसति स्म। तदा तदा देशपर्यटनम् अपि करोति स्म।

अथ कदाचित् बोधिसत्त्वः वर्षाकालस्य मासचतुष्टयं श्रावस्तिनगरे यापयित्वा अनन्तरं स्वीयशिष्यैः सह भद्रवतीनामकं ग्रामं गतवान्। तस्मात् ग्रामात् क्रोशपरिमितदूरे काचन नदी प्रवहति। तस्याः नद्याः तीरे अम्बुतीर्थम् इति एकं प्रसिद्धं स्थानम्। बोधिसत्त्वः शिष्यैः सह अम्बुतीर्थं प्रति प्रस्थितः।

अम्बुतीर्थस्य समीपे कस्यचित् मुनेः आश्रमः आसीत्। आश्रमे अम्बुतीर्थकः नाम विषसर्पः वसति स्म। सर्पभीत्या ग्रामवासिनः आश्रमस्य समीपम् अपि न गच्छन्ति स्म। इदानीं बोधिसत्त्वम् अपि तत्र न गन्तव्यम् इति ते जागरितवन्तः। किन्तु बोधिसत्त्वः अशृण्वन् इव तूष्णीं आसीत्।

तस्य शिष्येषु सागतस्थविरः अन्यतमः। सः अनेकानि मन्त्रशास्त्राणि जानाति स्म। किञ्च सः अप्रतिमधैर्यवान् अपि। ग्रामवासिनां जागरणवचनं सः अपि श्रुतवान्। तथापि सः कम् अपि अनुक्त्वा अम्बुतीर्थस्य आश्रमं

"जातककथा"

गतवान्। तदा तत्र मुनिः न आसीत्। सागतस्थविरः आश्रमं प्रविश्य एकस्मिन् कोणे स्थिते तृणकटे उपविष्टवान्। तस्य उपवेशन-समनन्तरं एव भयङ्कराकारः महासर्पः तस्य पुरतः उपस्थितवान्, तथा स्वीयां विशालां फणाम् ऊर्ध्वम् उन्नमय्य फूत्कारम् अकरोत्।

सागतस्थविरः किञ्चित् अपि विचलितः न अभवत्। "भवान् एव खलु अम्बुकतीर्थक-नामकः विषसर्पः?" इति सः पृष्टवान्।

तस्य प्रश्नस्य उत्तररूपेण सर्पस्य मुखात् बुस् बुस् इति महान् शब्दः निर्गतः। तथैव तस्य मुखात् कृष्णवर्णः धूमः उत्पन्नः। तदा सागतस्थविरः अपि स्वीयमन्त्रशक्त्या स्वमुखात् कृष्णधूमम् उत्पादितवान्। तत् दृष्टवतः सर्पस्य मुखात् अग्निज्वाला निर्गता। तदा सागत-स्थविरस्य मुखात् अपि अग्निज्वाला निर्गता।

एवंरीत्या पञ्चषनिमेषपर्यन्तं सागरस्थविरः विषसर्पः च स्वीयं स्वीयं सामर्थ्यं प्रदर्शितवन्तौ। सागरस्थविरस्य निर्भयत्वं दृष्ट्वा सः सर्पः मस्तकं अवनम्य पृष्ठतः गतवान्। "एतावता भवन्तं मुञ्चामि वा?" इति वदन् सागरस्थविरः तस्य पुच्छं गृहीत्वा सवेगम् आकृष्टवान्। विषसर्पस्य दंष्ट्रां निष्कास्य, तस्मै जीवदानं दत्त्वा मुञ्चितवान् च। अनन्तरं बोधिसत्त्वस्य तीर्थयात्रा सुगमरूपेण प्रवृत्ता। अम्बुतीर्थतः सर्वे प्रतिनिवृत्ताः।



किञ्चित्कालनन्तरं बोधिसत्त्वः कौशाम्बि-नगरं गतवान्। तस्य शिष्यः सागतस्थविरः महाविषसर्पस्य दन्तं निष्कासितवान् इति वार्ता तं प्रदेशं परितः स्थितेषु सर्वेषु ग्रामेषु प्रसृता आसीत्। कौशाम्बीनगरे अपि सर्वत्र एषा एव वार्ता वार्तालापविषयः आसीत्। अतः कौशाम्बीनगरवासिनः महता आदरेण बोधिसत्त्वस्य स्वागतं कृतवन्तः, तदर्थं नगरोद्याने सर्वप्रबन्धान् प्रकल्पितवन्तः।

परेद्युः प्रातः केचन नगरवासिनः बोधिसत्त्वस्य दर्शनार्थम् आगतवन्तः। तदा ते तत्रैव कस्यचित् महावृक्षस्य छायायाम् उपविष्टं सागतस्थविरं दृष्टवन्तः। नगर-वासिनः सागतस्थविरस्य समीपं गत्वा तं

नमस्कृत्य "भवन्तः इतः बहुदूरे हिमालयप्रदेशे वसन्ति। तत्र सर्वाणि आवश्यकवस्तूनि न लभ्यन्ते। अतः तत्र दुर्लभं वस्तु यत् किमपि अपेक्षितम् अस्ति चेत् वदन्तु। वयम् आनीय दास्यामः" इति उक्तवन्तः।

सागतस्थविरः किमपि अनुक्त्वा तूष्णीं स्थितवान्। तदा शिष्येषु एकः "अयि भोः! बहुदिनेभ्यः अस्माकं पारावतमद्यस्य पानापेक्षा अस्ति। अद्यावधि कुत्रापि तत् न लब्धम्। तत् मद्यम अनीय दास्यन्ति चेत्, अस्माकं महान् सन्तोषः भविष्यति" इति मन्दस्वरेण उक्तवान्।

"तथा एव अस्तु" इति अङ्गीकृत्य नगरवासिनः तस्मिन् मध्याह्ने एव परावतमद्यं सम्पाद्य, कस्यचित् गृहस्थस्य गृहे तत् मद्यं गुप्तरूपेण स्थापितवन्तः। अनन्तरं सागतस्थविरं तत्र नीतवन्तः।

सागतस्थविरः पारावतमद्यं पीत्वा क्रमेण मदमत्तः भूत्वा, ततः उत्थाय उन्मत्तवत् प्रलपन् नगरद्वारं प्रति धावितवान्। अनन्तरम् अग्रे धावितुम् अशक्तः सः तत्रैव पतितवान्। अचेतनः अभवत् च। तस्य सहपाठिनः तं स्कन्धे आरोप्य बोधिसत्त्वस्य समीपं नीतवन्तः।

ते सहपाठिनः सागतस्थविरं बोधिसत्त्वस्य पुरतः भूमौ स्थापितवन्तः। तदा सागतस्थविरः क्रोधेन उत्थाय स्वीयपादौ बोधिसत्त्वं प्रति प्रसार्य पुनः शयितवान्।

"पूर्वम् एषः सागतस्थविरः महाविषसर्पस्य शक्तिभङ्गं कृतवान्। इदानीं तु मद्यपानकारणतः सामान्यसर्पं वशीकर्तुम् अपि न शक्नोति। एषः अनुभवः कदापि न विस्मर्तव्यः। अद्य आरभ्य केनापि मद्यपानं न करणीयम्। एषः अस्माकं नियमः" इति उक्तवान् बोधिसत्त्वः।

यदा मद्यस्य प्रभावः अपगतः, तदा सागतस्थविरः अतीव दुःखितः भूत्वा बोधिसत्त्वस्य पादयोः पतितवान्। बोधिसत्त्वः प्रीत्या तम् उत्थाप्य समाधानवचनानि उक्तवान्।






अस्माकं नद्यः –

# सरस्वती

गौतमस्य त्रयः पुत्राः-एकतः, द्वितः, त्रितः, इति । तृतीयः त्रितः स्वबाल्ये एव पाण्डित्येन सदाचारेण च ख्यातः आसीत् । तपोवने निवसन्तः सर्वे मुनयः त्रितस्य प्रशंसां कुर्वन्ति स्म ।

कालान्तरे त्रयः अपि युवावस्थां प्राप्तवन्तः । एकदा ते आश्रमात् प्रस्थाय सुदूरे स्थितानां पितुः शिष्याणां समीपं गतवन्तः । गौतमस्य शिष्याः मुनिकुमारान् आदरपूर्वकं सत्कृतवन्तः । मुनिकुमारेषु कनिष्ठः त्रितः ग्रामीणानाम् आकर्षणकेन्द्रं जातः ।





केषाञ्चित् दिनानाम् अनन्तरं त्रयः अपि आश्रमं प्रतिनिवृत्ताः । तैः सह ग्रामीणैः प्रीतिपूर्वकं दत्तानि आभरणानि धनं, गावः च आसन् । "शुभे मुहूर्ते कश्चन यज्ञः करणीयः" इति निश्चित्य ते उत्साहपूर्वकम् अग्रे गतवन्तः ।



ज्येष्ठसहोदरयोः कनिष्ठस्य त्रितस्य विषये असूया आसीत्। अतः तौ मार्गे गच्छन्तौ- "त्रितस्य भागः कथम् अपहरणीयः?" इति विषये चिन्तयन्तौ कुतन्त्रं रचितवन्तौ। त्रितः एतत् किमपि न जानाति स्म। प्रकृतिसौन्दर्यस्य आस्वादने मग्नः सः सन्तोषेण अग्रे अग्रे गच्छन् आसीत्।

मार्गे आहारान्वेषणे मग्नः कश्चन वृकः एकतेन द्वितेन च दृष्टः। सः वृकः क्रमशः त्रितस्य समीपं गच्छन् आसीत्। एतत् दृष्ट्वा अपि ज्येष्ठौ तौ त्रितं न सूचितवन्तौ। स्वयं तु प्राणरक्षणार्थं त्वरया वृक्षम् आरुह्य उपविष्टवन्तौ।






समीपम् आगच्छन्तं वृकं दृष्ट्वा भीतः त्रितः धावितुम् आरब्धवान्। धावनसमये पादस्खलनेन सः कस्मिंश्चित् महागर्ते पतितवान्। वृकः किञ्चित्कालं यावत् गर्तं परितः सञ्चरन् आसीत्। अनन्तरं निराशया ततः गतः। त्रितः 'माम् उद्धरन्तु' इति उच्चैः वदन् सहोदरौ पुनः पुनः आहूतवान्। किन्तु तेन किमपि प्रयोजनं न सिद्धम्।

वृकः यदा दूरङ्गतः तदा एकतः द्वितः च सावधानतया वृक्षतः अवतीर्णौ। तौ मन्दं गत्वा गर्तस्य पार्श्वे पतितं धनस्यूतं स्वीकृतवन्तौ। गोभिः सह स्वकीयं मार्गम् अनुसृतवन्तौ च। त्रितस्य आह्वानं श्रुत्वा अपि तौ अशृण्वन्तौ इव ततः निर्गतवन्तौ।






यज्ञस्य मुहूर्तः आसन्नः आसीत्। अतः त्रितः चिन्तामग्नः जातः। बहिः गन्तुम् अशक्तः सः अन्यमार्गम् अजानन् 'गर्ते एव यज्ञः करणीयः' इति निश्चितवान्। गर्ते पतितेषु शुष्कपत्रेषु अग्नेः आह्वानं कृतवान्। मन्त्रोच्चारणं कुर्वन् गर्ते एकत्र कोणे विद्यमानं जलम् घृतं मत्वा आहुतीः समर्पितवान्।

त्रितस्य अग्रजौ आश्रमं प्राप्तवन्तौ। यज्ञार्थम् आवश्यकाः सामग्रीः एकत्रीकृत्य यज्ञम् आरब्धवन्तौ च। यज्ञविषये तयोः विशेषश्रद्धा आसक्तिः वा न आसीत्। अतः विध्यनुसारं यज्ञः न प्रवृत्तः। मन्त्रोच्चारणं अपि शुद्धं न आसीत्। अतः यज्ञेन अपेक्षित परिणामं तौ न प्राप्तवन्तौ। तयोः यज्ञकार्यं निष्फलं जातम्।





गर्ते सामग्रीणाम् अभावे अपि श्रद्धया यज्ञं कुर्वतः त्रितस्य विषये देवाः सन्तुष्टाः। अतः ते प्रत्यक्षीभूय 'अपेक्षितं पृच्छतु' इति त्रितम् उक्तवन्तः। तदा त्रितः प्रार्थितवान्- "अहं यथा गर्तात् बहिः गच्छेयं तथा भवतु। गर्ते विद्यमानं जलं दैवतासमर्पणयोग्यं पवित्रं भवतु" इति।

देवाः त्रितस्य इच्छाद्वयम अपि पूरितवन्तः। जलस्य स्रोतः वेगेन उद्गतम्। तेन त्रितः उपरि आगतः। देवाः तयोः दुष्टसहोदरयोः कृते शापं दत्तवन्तः। तेन तौ वराहजन्म प्राप्तवन्तौ।






प्रवाहरूपेण प्रवहन्ती सा नदी सरस्वतीनाम्ना ख्याता अभवत्। वैदिकाः ऋषयः सर्वे सहर्षं एतस्याः नद्याः स्तुतिं कृतवन्तः। कालान्तरे एषा नदी पुनः भूगर्भं प्रविष्टवती। अन्तर्वाहिनी एषा सरस्वती नदी प्रयाग-(इलहाबाद) समीपे गङ्गया यमुनया च मिलिति। एतासां सङ्गमस्थलं 'त्रिवेणीसङ्गमः' इति ख्यातम्।




# कस्य दोषः?

पूर्वं लक्ष्मणपुरे मिहिरदेवः राज्यं परिपालयन् आसीत्। कदाचित् निर्मलानन्दः नाम ऋषिः तस्य राजधानीम् आगतवान्। अल्पे एव काले निर्मलानन्दस्य कीर्तिः समग्रे नगरे व्याप्ता। जनाः तं भगवतः अवतारं विभूतिपुरुषं च मन्यन्ते स्म।

राजा मिहिरदेवः निर्मलानन्दस्य कीर्तिं श्रुतवान्। तं मुनिं द्रष्टुम् इष्टवान्। किन्तु अत्रान्तरे कश्चन गुप्तचरः वार्ताम् आनीतवान् यत् निर्मलानन्दस्य व्यवहारे कपटता अस्ति इति। तदा राजा निर्मलानन्दस्य व्यवहारं परिशीलयितुं अधिकान् गुप्तचरान् नियोजितवान्। अल्पे एव काले निर्मलानन्दस्य कपटता प्रमाणीकृता अभवत्।

राजा निर्मलानन्दम् आस्थानम् आगन्तुम् सूचितवान्। यदा सः आगतः तदा पूर्णायां सभायां राजा तदीयान् कपटाचारान् एकैकशः वक्तुम् आरब्धवान्। एतत् श्रुतवतः ऋषेः मनसि निश्चयः जातः यत् राजा सर्वम् आमूलाग्रं जानाति इति।

तथापि निर्मलानन्दः मनसा अविचलः एव आसीत्। सः धाष्टर्येन उक्तवान्- "महाराज! मद्विषये भवता यत् श्रुतं तत् सत्यम् एव। किन्तु अत्र मम दोषः कोऽपि नास्ति। सारासारविवेकं विना सर्वेषु विश्वासं प्रकटयन्तः जनाः एव दोषभागिनः। महापण्डिताः, मेधाविनः प्राज्ञाः सर्वे मम आश्रमम् आगच्छन्ति। किमर्थं ते एवं कुर्वन्ति? स्वकामनानां पूर्तये एव किल?" इति।

"किन्तु भवान् तेषां दौर्बल्यस्य दुरुपयोगं स्वीकुर्वन् जनान् वञ्चयति इति तु सत्यं किल?" इति पृष्टवान् मिहिरदेवः।

"महाराज! अत्र मम दोषः कः? एते बुद्धिहीनाः जनाः भगवतः प्रार्थनायाः अपेक्षया



मम आश्रयः एव सुलभः इति चिन्तयन्ति। अतः एतेषां स्वार्थिजनानाम् एव अत्र दोषः। यदि एते जनाः मां महात्मस्थाने न आरोपयन्ति, यदि वा एतावन्तम् आदरं न प्रदर्शयन्ति, तर्हि मया एतादृशः व्यवहारः न क्रियते स्म।

अन्याच्च जनाः मम सादरसत्कारं यत् कृतवन्तः तेन तेषां काऽपि हानिः न जाता। एते मुष्टिमितान् तण्डुलान् मम कृते समर्पयन्ति चेत् अथवा कानिचन फलानि समर्पयन्ति चेत् किं तेषाम् ऐश्वर्यं न्यूनं भविष्यति?'' इति पृष्टवान् निर्मलानन्दः।

राजा निर्मलानन्दस्य वादं श्रुत्वा आश्चर्यचकितः अभवत्। सः उत्तरं वक्तुं न शक्तवान्।

निर्मलानन्दस्य वचनेषु प्रतीयमानां कपटतां जानन् अपि सः तर्केण तत् कथं खण्डनीयम् इति न जानाति स्म। मन्त्रिणः परिस्तितिः अपि एवम् एव आसीत्। एतत्सर्वं परिशीलयन् राजगुरुः मन्दहासं प्रकटयन् उत्थाय निर्मलानन्दम् उक्तवान्- ''भवतः वचनश्रवणेन काचित् कथा मम मनसि आगता। ध्यानपूर्वकं शृणोतु तावत्।

पूर्वं कस्याश्चित् मातुः चत्वारः पुत्राः आसन्। तेषु एकः मुग्धः आसीत्। तदीयमुग्धतायाः दुर्लाभं स्वीकुर्वन्तः इतरे सहोदराः तं बहुधा पीडयन्ति स्म। मात्रा पृष्टं चेत् ते वदन्ति स्म यत् यदि सः विरोधं प्रदर्शयति तर्हि अस्माभिः एवं क्रियते स्म वा? इति।

माता चिन्तितवती- एतेषां वचनेषु सत्यता अस्ति इति। अतः सा मुग्धं तं पुत्रं सूचितवती- यदा अग्रजाः भवन्तं पीडयन्ति तदा भवता विरोधः प्रदर्शनीयः, जागरूकेण भवितव्यं च इति। अल्पे एव काले तस्याः मरणम् अभवत्। सा नरकलोकं प्राप्तवती।

नरकलोके यमराजः तस्याः दोषं प्रदर्शयन् उक्तवान्-''अयि मातः! हस्तस्य पञ्च अङ्गुलयः समानाः न भवन्ति। भवत्याः मुग्धं पुत्रम् इतरे पुत्राः पीडितवन्तः। अतः दोषः तेषाम् एव, न तु तस्य मुग्धबालकस्य। एते पुत्राः भवत्या बोधनीयाः आसन्। तथा किमपि अकृत्वा

भवती तेषां दोषाणां समर्थनं कृतवती। अतः भवती पापभागिनी जाता" इति।

एतया कथया सिद्धं यत्- 'बलम् एव न्याय्यम् इति वादः राक्षसत्वं द्योतयति, न तु मानवत्वं इति। यस्यकस्यापि मुग्धतायाः आधारेण लाभः यत् सम्पाद्यते तत् दोषाय एव। मुग्धाः जनाः दुष्कृतेः विरोधं प्रकटयितुं न शक्नुवन्ति इत्येतत् तेषां दौर्बल्यम्।

अये निर्मलानन्द ! मानवाः सर्वे सहोदराः। असाध्यस्य कामना, कामनायाः पूर्तये सुलभोपायस्य आश्रयणम् इत्यादिकं जनानां दौर्बल्यम् एव इति अहम् अङ्गीकरोमि। किन्तु तेषां दौर्बल्यस्य आधारेण भवान् सुखजीवनं यापयन् अस्ति किल, तच्च भवतः अपराधः।

भवतः पूजया कापि हानिः न जाता इति भवान् प्रतिपादितवान्। भवतः सत्कारेण भोजनदानेन च जनानां आर्थिकहानिः न जाता स्यात्। जाता चेदपि अल्पप्रमाणेन स्यात्। किन्तु भवान् तेषां बलहीनतां यत् प्रोत्साहितवान् तेन तेषां मानसिकी हानिः जाता। मानसिकी अवनतिः सर्वनाशकारिणी। अतः अनर्थकारकः भवान् अवश्यं दण्डनीयः। यदि न दण्डयते तर्हि नरकलोके यमः यथा तस्याः मातुः उपरि दोषम् आरोपितवान् तथैव एतद्देशस्य जनाः महाराजस्य एतस्य उपरि दोषं आरोपयेयुः" इति।

राजगुरोः वचनेन लज्जितः निर्मलानन्दः शिरः अवनमय्य मौनं स्थितवान्। राजा तु बहु सन्तुष्टः। "भवता एव एषः वञ्चकः दण्डनीयः" इति सः राजगुरुं प्रार्थितवान्।

तदा राजगुरुः उक्तवान्- " निर्मलानन्दः तदीयः शिष्याः च शरीरेण पुष्टाः सन्ति। आलस्यरूपिणा दुर्गुणेन एते दुर्मार्गे नीताः। अतः एते सर्वे राजोद्याने कर्मकरत्वेन नियोजनीयाः" इति।

राजा मिहिरदेवः राजगुरोः वचनानुसारं तान् उद्यानकार्येषु नियोजितवान्।



# मूर्खस्य दानम्

रामपुरस्य सर्वे ग्रामीणाः सम्भूय 'ग्रामे एकं राममन्दिरं निर्मातव्यम्' इति निश्चितवन्तः । एतदर्थं साहाय्यधनं सङ्ग्रहणीयम् इत्यपि तैः निश्चितम् ।

सर्वे सम्भूय ग्रामप्रमुखस्य समीपं गतवन्तः । मन्दिरनिर्माणस्य विचारं प्रस्तुतीकृतवन्तः च ।

ग्रामप्रमुखः उक्तवान्- "ग्रामस्य सीमायां यत् आम्रोद्यानम् अस्ति तत्पार्श्वे विद्यमाना विशाला भूमिः मदीया एव इति भवन्तः जानन्ति एव । तस्याः भूमेः मूल्यं सहस्ररूप्यकात्मकं भवेत् एव । अतः मया सहस्ररूप्यकाणि दत्तानि इति गणनापुस्तके लिखित्वा तां भूमिं स्वीकुर्वन्तु" इति ।

ग्रामप्रमुखस्य वचनेन ग्रामीणाः सर्वे सन्तुष्टाः । 'एतस्याम् एव भूमौ मन्दिरं निर्मातुं शक्यते' इति ते सर्वे चिन्तितवन्तः । अतः महता उत्साहेन गृहं गृहं गत्वा धनसङ्ग्रहं कृतवन्तः ।

सर्वत्र सङ्ग्रहे कृते अपि तत् धनं मन्दिरनिर्माणार्थं अपर्याप्तम् आसीत् । पञ्चशतरूप्यकाणां न्यूनता दृश्यते स्म । न्यूनता कथं पूरणीया इति ते न जानन्ति स्म । अतः सर्वे ग्रामप्रमुखस्य गृहं गतवन्तः । उपस्थितां समस्यां निवेदितवन्तः च ।

सर्वं श्रुत्वा ग्रामप्रमुखः उक्तवान्- "अये ! एषः कश्चन क्षुल्लकः विषयः । मन्दिरार्थं मया भूमिः दत्ता किल ? तस्याः भूमेः मूल्यं सहस्रं रूप्यकाणि । इदानीं मूल्यं वर्धयामि । तस्या मूल्यं सार्धैकसहस्रं भवतु । मया पुनरपि दानरूपेण पञ्चशतरूप्यकाणि दत्तानि भवन्तु । तदा च पञ्चशतरूप्यकात्मिका न्यूनता परिहृता भविष्यति किल ?" इति ।





# नर्तनसमर्थः अजः

नागपुरे मुकुन्दः नाम कश्चित् आसीत्। सः महाधनिकः। तस्य कुसीदव्यवहारः आसीत्। येभ्यः सः धनं ददाति तेभ्यः निर्दाक्षिण्यपूर्वकं वृद्धिं चक्रवृद्धिं च स्वीकरोति स्म। अतः एव मुकुन्दतः ये धनं स्वीकुर्वन्ति ते भिक्षुकाः भवन्ति स्म।

क्रमशः नागपुरीयाः बहवः मुकुन्दस्य सकाशात् ऋणं स्वीकृत्य आपदि पतिताः। अतः ते तं मनसा निन्दन्ति स्म। केचन तु प्रत्यक्षतः एव निन्दां कुर्वन्ति स्म। क्रमशः ग्रामे सर्वत्र तद्विषये द्वेषभावना प्रसृता। 'इतः परम् अधिकदिनं ग्रामे तिष्ठामि चेत् अपायः आपतेत्' इति मुकुन्दः चिन्तितवान्। अतः सः नागपुरं त्यक्त्वा अन्यं समृद्धं ग्रामं गतवान्। तत्रापि स्वकीयं कुसीदव्यवहारम् आरब्धवान् च।

मुकुन्दः नागपुरतः गमनात् पूर्वं यैः ऋणं न प्रत्यर्पितं तेषां सर्वाणि गृहवस्तूनि वशीकृत्य सघोषविक्रयणं कृतवान् आसीत्। किन्तु एतेन आगन्तव्यं यत् धनम् आसीत् तत् पूर्णतया न आगतम्। अतः मुकुन्दः एतत्कार्यार्थम् स्वपुत्रं भूपतिं नागपुरं प्रति प्रेषितवान्।

'अहम् अतीव बुद्धिमान्' इति भूपतेः महान् गर्वः आसीत्। मित्राणां पुरतः सः बहुधा आत्मश्लाघनं करोति स्म अपि। किन्तु भूपतेः बुद्धिमत्ताविषये मुकुन्दस्य विश्वासः सर्वथा न आसीत्।

भूपतिः नागपुरम् आगत्य प्राप्तव्यं धनं समग्रं सङ्गृहीतवान्। प्रतिप्रस्थानसमये पित्रा प्रेषिता काचित् वार्ता भूपतिना प्राप्ता— "नागपुरे उत्तमजातीयाः अजाः लभ्यन्ते। तेषां मूल्यं यावत् अपि भवतु नाम। चिन्तां विना एकः उत्तमः अजः क्रेतव्यः" इति।

भूपतिः विपणिं गतवान्। तेषु दिनेषु



एकस्य अजस्य मूल्यं पञ्चरूप्यकात्मकम्। भूपतिः एकस्य वणिजः समीपं गत्वा एकं पुष्टम् अजं प्रदर्शयन् मूल्यं पृष्टवान्। वणिक् 'तस्य मूल्यं दशरूप्यकात्मकम्' इति उक्तवान्।

"किम् एषः अत्युत्तमः अजः?" इति पृष्टवान् भूपतिः।

तदा वणिक् उदासीनतां प्रकटयन् उक्तवान्- "मया ये अजाः विक्रीयन्ते ते सर्वे उत्तम-जातीयाः एव। किन्तु इतोऽपि श्रेष्ठः अजः अपेक्षितः चेत् व्याधप्रमुखस्य गजपतेः समीपं गच्छतु। तत्र उत्तमाः अजाः लभ्यन्ते" इति।

"गजपतिः किं करोति? कुत्र निवसति?" इति पृष्टवान् भूपतिः।

"विपणेः पार्श्वे सरोवरस्य तीरे तस्य शिबिरम् अस्ति। सः अजविक्रयणं करोति। जनाः तं मान्त्रिकः गजपतिः इति आह्वयन्ति। तदीयवेषभूषणेन भवान् दूरतः एव तं ज्ञातुं शक्नोति" इति उक्तवान् वणिक्।

भूपतिः गजपतिसमीपं गतवान्। स्वस्य आगमनकारणं गजपतये निवेदितवान् च।

भूपतिं परीक्षादृष्ट्या एकवारं दृष्ट्वा गज-पतिः उक्तवान्- "मम समीपे नटः कश्चन अजः अस्ति। यदि द्रष्टुम् इच्छति तर्हि भवता विंशतिरूप्यकाणि दातव्यानि" इति।

'नटः अजः अवश्यं द्रष्टव्यः' इति भावना भूपतेः मनसि तीव्रतां प्राप्ता। अतः सः तस्मै व्याधाय विंशतिरूप्यकाणि दत्तवान्, तं विशिष्टम् अजं दृष्टवान् च।

सः अजः रज्जोः उपरि गच्छति स्म। उन्नतं स्तम्भम् आरोहति स्म। एवं च सः अजः नटवरम् अपि अतिशेते स्म।

एतत्सर्वं दृष्ट्वा भूपतिः आश्चर्यचकितः अभवत्। सः व्याधप्रमुखं पृष्टवान्- 'एतस्य मूल्यं कियत्?" इति।

"वस्तुतः एतस्य विक्रमणं मया न चिन्तितम् एव। विक्रेतव्यम् एव चेत् प्रायः सहस्र-रूप्यकाणां कृते विक्रयणं कुर्याम्" इति उक्तवान् सः व्याधः।

"अश्रुतपूर्वा वार्ता एषा। अजस्य मूल्यं सहस्ररूप्यकात्मकं भवति वा?" इति आश्चर्येण

पृष्टवान् भूपतिः ।

"एतस्य मूल्यं श्रुत्वा एव भवान् आश्चर्य-चकितः । एवं चेत् भवान् यदि गायनसमर्थस्य अजस्य मूल्यं शृणोति तर्हि किं वा वदेत् ?" इति गजपतिः पृष्टवान् ।

"गायनसमर्थः अजः ! एतत् तु सर्वथा विश्वासार्हं न । भवान् मां ग्रामीणं भावयन् वञ्चयन् न अस्ति किल ?" इति विस्मयं प्रकटितवान् भूपतिः ।

"अहम् असत्यं न वदामि । गायनसमर्थः अजः अपि मम समीपे अस्ति । यदि तदीयं गानं भवता श्रोतव्यं तर्हि शतरूप्यकात्मकं शुल्कं दातव्यम् । किं तदीयं गानं श्रोतुम् इच्छति ?" इति ।

भूपतिः शतं रूप्यकाणि दातुं सिद्धः अभवत् । व्याधः भूपतेः हस्ततः शतं रूप्यकाणि स्वीकृत्य स्वकीयं शिबिरं प्रविष्टवान् । कञ्चित् अजं बहिः आनीतवान् । प्रीत्या तस्य उपरि हस्तं स्थापयन् गातुम् आदिष्टवान् ।

अजः मनुष्यस्वरेण मधुरं गायनम् अकरोत् । गायने स्वरतालादीनां साङ्गत्यम् समीचीनम् आसीत् । आश्चर्यचकितः भूपतिः 'कथम् एतत् शक्यम्' इति चिन्तयन् मौनम् उपविष्टः आसीत् ।

गायनस्य अन्ते भूपतिः पृष्टवान्- "एतस्य अजस्य मूल्यं किम् ?" इति ।

"पञ्चसहस्रं रूप्यकाणि" इति उक्तवान् व्याधः ।





तस्य अजस्य शरीरं वर्णमयैः वस्त्रैः आवृत्तम् आसीत्। पादद्वयेन नर्तनं कुर्वन् अजः सुमधुरं गायनम् अपि अकरोत्। भूपतिः चिन्तितवान्- 'एतदतिरिच्य आश्चर्यकरः विषयः नास्ति'' इति।

''एतस्य अजस्य किं मूल्यम्?'' इति पृष्टवान् भूपतिः। ''दशसहस्रं रूप्यकाणि। मूल्ये न्यूनताम् अहं न अङ्गीकरोमि। आवश्यकं चेत् दशसहस्ररूप्यकाणि दत्त्वा इदानीम् एव एतम् अजं नयतु। अन्यथा तूष्णीम् इतः गच्छतु'' इति व्याधः उक्तवान्।

''एतत् मूल्यं तु अत्यधिकम्'' इति उक्तवान् भूपतिः। तदा व्याधः उक्तवान्- ''तथा किमपि न। यदि एतस्य गायनस्य नर्तनस्य च प्रदर्शनं व्यवस्थापयति तर्हि इतोऽपि द्विगुणितं धनं सम्पादयितुं शक्यते किल?'' इति।

भूपतिः चिन्तितवान्- ''प्रायः पिता एतस्य विचित्रशक्तिशालिनः अजस्य विषये श्रुतवान् स्यात्। अतः एव उत्तमम् अजं क्रीणातु इति वार्तां प्रेषितवान्। एवं न चेत् अपि एतादृशम् अपूर्वम् अजं दृष्ट्वा सः निश्चयेन तुष्यति। एतस्य नर्तनगायनयोः प्रदर्शनेन यथेष्टं धनम् अपि सम्पादयितुं शक्यते'' इति।

एवं चिन्तयित्वा भूपतिः व्याधेन सह मूल्यविषये चर्चाम् आरब्धवान्। बहुधा

''पञ्चसहस्रं रूप्यकाणि! एतत् तु मूल्यम् अत्यधिकम्'' इति उक्तवान् भूपतिः।

''किमर्थम्? भवान् गायनसमर्थम् अजं कुत्रापि दृष्टवान् वा? नर्तनगायनसमर्थस्य अजस्य अपेक्षया अस्य मूल्यं तु न अधिकम्'' इति उक्तवान् व्याधः।

''तादृशः अपि अजः अस्ति वा? अहं तं द्रष्टुं शक्नोमि वा?'' इति पृष्टवान् भूपतिः।

''किमर्थं न? अवश्यम् द्रष्टुम् अर्हति। किन्तु तदर्थं द्विशतं रूप्यकाणि दातव्यानि'' इति व्याधः उक्तवान्।

भूपतिः नर्तनगायनसमर्थम् अजं द्रष्टुं द्विशतं रूप्यकाणि दत्तवान्। व्याधः शिबिरस्य अन्तः गत्वा पुनः अन्यम् अजम् आनीतवान्।

चर्चाविचर्चा प्रवृत्ता। अन्ते भूपतिः अष्टसहस्र-रूप्यकाणि दत्त्वा तम् अजं क्रीतवान्। तस्य समीपे यावत् धनम् आसीत् तत्सर्वं समाप्तम्। अनन्तरं भूपतिः गृहं गन्तुं भाटकशकटम् अन्विष्टवान्। किन्तु तेन सह विद्यमानम् अजं दृष्ट्वा शाकटिकः 'अर्धं भाटकम् अग्रिम-धनरूपेण दातव्यम्' इति उक्तवान्।

इदानीं किं करणीयम् इति भूपतिः न ज्ञातवान्। एकवारं चिन्तितवान्- "ग्रामे कस्यचित् सकाशात् किञ्चित् धनं ऋणरूपेण स्वीकरोमि" इति। तदा अन्यः विचारः उत्पन्नः- ग्रामे सर्वे मम हस्ते यथेष्टं धनम् अस्ति इति जानन्ति एव। अतः ऋणं किमर्थम् इति ते पुनः पृच्छन्ति इति। समग्रं धनं दत्त्वा अजः क्रीतः इत्येतं विषयं सर्वेषां पुरतः प्रकटी-कर्तुम् न इच्छति स्म सः।

अन्ते अनन्योपायः सः गृहं प्रति अजेन सह पादाभ्याम् एव प्रस्थितः। बुभुक्षया श्रमेण च पीडाम् अनुभवन् सः स्वग्रामं प्राप्त-वान्। तत्र पितरम् उक्तवान्- "पश्यतु, मया कश्चन अपूर्वः अजः क्रीतः। एतादृशः जगति अन्यः नास्ति एव। एतत् दृष्ट्वा भवान् आश्चर्येण मूकः भविष्यति" इति।

"एवं वा?" इति वदन् मुकुन्दः अजं परीक्षादृष्ट्या सम्यक् परिशीलितवान्। पुनः उक्तवान् च- "श्वस्तनभोजनकूटार्थं मया



भूस्वामी सचिवः च आहूतौ। तत्र एतस्य मांसस्य पाकः भवतु। पाकानन्तरम् एव एतस्य महत्त्वस्य निर्णयः भविष्यति" इति।

एतत् वचनं श्रुत्वा भूपतिः भीतः। सः त्वरया उक्तवान्- "किम् उक्तवान् भवान्! खादनम्! खादनार्थम् एषः मया न आनीतः। एतद्द्वारा वयं लक्षशः रूप्यकाणि सङ्ग्रहीष्यामः। श्वः सर्वान् प्रमुखान् अत्र आह्वयतु। ते सर्वे एतस्य विशेषसामर्थ्यं पश्यन्तु। अनन्तरम् समग्रे ग्रामे अजस्य एव वार्ता! धनिकाः एतम् अजं क्रेतुम् अहमहमिकया आगच्छन्ति। कोषस्य अर्धभागम् अपि दातुं सिद्धाः भवन्ति ते" इति।

पुत्रस्य मुखात् आगतानि एतानि उत्साह-

पूर्णवचनानि श्रुत्वा मुकुन्दः चिन्तितवान्– 'अजे काऽपि विशेषता अस्ति' इति। अतः सः भोजनकूटार्थम् अन्यम् अजं क्रीत्वा तस्य मांसेन पाकं कारितवान्।

अपरस्मिन् दिने भूस्वामी, सचिवः, ग्राम–प्रमुखः इत्यादयः भोजनकूटार्थम् आगतवन्तः। 'भोजनतः पूर्वं कश्चन अपूर्वः मनोरञ्जनकार्य–क्रमः व्यवस्थापितः अस्ति' इति सर्वान् मुकुन्दः सूचितवान्। भूपतिः सर्वेषाम् अतिथिजनानां पुरतः तम् अजम् आनीय आदिष्टवान्– "अये, भवतः नृत्यकौशलं गान-प्रावीण्यं च प्रदर्शयतु" इति।

द्वित्राः निमेषाः अतीताः। पञ्चदशनिमेषाः अपि अतीताः। अर्धघण्टा अपि अतीता। एतत्समये भूपतिः मध्ये मध्ये करताडनपूर्वकं पुनः पुनः नृत्यार्थम् अजम् आदिष्टवान्। किन्तु अजः तत्रैव निश्चलः आसीत्।

अपमानेन लज्जितः मुकुन्दः शिरः अव-नमय्य स्थितवान्। अतिथयः सर्वे उच्चैः हसितवन्तः।

भूस्वामी भूपतिं पृष्टवान्- "प्रायः सः मान्त्रिकः गजपतिः एव भवन्तं सम्यक् वञ्चित-वान् स्यात्। सत्यं किल?" इति।

"आम्! अहं तस्य सकाशात् एव एतम् अजं क्रीतवान्" इति क्षीणस्वरेण उक्तवान् भूपतिः।

"सः जन्मना एव महावञ्चकः। स्वमन्त्र-बलेन सः अजान् नर्तयति गाययति च। किन्तु अजाः यदा तस्य गृहात् निर्गच्छन्ति तदारभ्य ते पूर्ववत् एव भवन्ति" इति उक्त–वान् भूस्वामी।

जातां महावञ्चनां ज्ञात्वा भूपतिः मुकुन्दः च दिग्भ्रान्तौ। एतेन प्रसङ्गेन तयोः बुद्धि–शक्तिः क्षीणा जाता।

तद्दिनस्य भोजनकूटार्थम् आगताः परस्परं वदन्ति स्म– "अन्यगृहाणां लुण्ठनेन यत् सम्पादितम् आसीत् तत् वञ्चकेन व्याधेन वशीकृतम्" इति।



# विपरीतः परिणामः

पूर्वं मिथिलायां मन्दभाग्यः नाम राजा राज्यपरिपालनं करोति स्म। सः महाकोपी अहङ्कारी गर्वशीलः च। युक्तायुक्तताम् अविचार्य एव कार्यं करोति स्म। तस्य मनसि यः विचारः स्फुरति तत्क्षणे एव तत् राजाज्ञा-रूपेण व्यवहारे आगच्छेत् एव।

एकदा मन्दभाग्यः राजभवनस्य चन्द्रशालायां विहरन् आसीत्। राजमार्गे बहवः इतस्ततः गच्छन्तः तेन दृष्टाः। तेषां वेषभूषणादयः विभिन्नाः इति विषयं सः लक्षितवान्। तदा तस्य मनसि कश्चन विचारः स्फुरितः। तत्क्षणे एव सः मन्त्रिणम् आहूतवान्-"मन्त्रिवर्य!" इति।

"उपस्थितः अस्मि!" इति उक्तवान् मन्त्री।

"राजपथं परिशीलयतु। जनाः स्वेच्छया वस्त्रं धृत्वा सञ्चरन्तः सन्ति। अहम् एतां स्वेच्छाप्रवृत्तिं न इच्छामि एव। वेषभूषेषु आहारे व्यवहारे च सर्वत्र एकरूपता भवेत् इति मम आशयः। भोजने देवताराधने भाषायां च एकता भवति चेत् बहु समीचीनं किल? अतः इदानीं एव एतद्विषयं सडिण्डिम-घोषं प्रसारयतु। एषा मम आज्ञा" इति उक्तवान् राजा।

मन्त्री विनयपूर्वकं निवेदितवान् यत् वेषभूषादिषु भाषायां भोजने व्यवहारे-एवं सर्वत्र एकरूपता भवति चेत् जनाः पाञ्चालिकाः इव अरोचकाः भविष्यन्ति। अतः एवम् आज्ञा न उचिता इति। राजा एतत् अशृण्वन् इव आदिष्टवान् 'राजाज्ञा पालिता भवेत् एव' इति।

द्वित्राणि दिनानि अतीतानि। 'मन्त्री मम आदेशानुसारं डिण्डिमघोषं कारितवान् वा न वा इति परीक्षणीयम्' इति उद्देशेन राजा

"पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा"

मन्दभाग्यः स्वयं प्रवृत्तः। स्वराज्यस्य जनाः सर्वे यदि आहारविहारादिषु समानाः भवन्ति समानं सम्प्रदायम् अनुसरन्ति च, तर्हि प्रपञ्चे एव मम राज्यस्य विशिष्टं स्थानं भविष्यति। तेन मम नाम अपि चिरकालं स्थास्यति'' इति चिन्तितवान् आसीत् सः।

चतुर्थे दिने प्रातः राजा विहारार्थं उद्यानं गतवान्। तत्र दासाः दास्यः च समानवेषेण आसन्। स्त्रीपुरुषाणां भेदं ज्ञातुम् अपि न शक्तवान् राजा। एतत् दृष्ट्वा तस्य मनः उद्विग्नम्।

एतदनन्तरं राजा अन्तःपुरं गतवान्। तत्रापि एषा एव अवस्था। का राज्ञी का दासी इति ज्ञातुम् एव कष्टम् आसीत्। सर्वासाम् वेषः आभूषणं च समानं किल?

एतत् दृष्ट्वा राजा मतिभ्रान्तः इव जातः। मन्त्रिणः विषये अतीव कुपितः सः साक्षात् राजसभां गतवान्। तत्रापि एषा एव परिस्थितिः। सर्वेषां वस्त्राणि समानानि आसन् इत्यतः कः मन्त्री? कः सेनापतिः? कः सेवकः? इति ज्ञातुम् एव न शक्यम् आसीत्।

''मन्त्रिवर्य!'' राजा उच्चैः गर्जितवान्।

उत्तररूपेण मन्त्री अपि तेन एव स्वरेण उक्तवान् ''मन्त्रिवर्य!'' इति।

''अरे दुष्ट! अहं मन्त्री वा?'' इति राजा कोपेन पृष्टवान्। मन्त्री अपि कोपेन तदेव वाक्यम् शुकः इव उच्चरितवान्।

मन्त्रिणः एतस्य व्यवहारस्य कारणं राजा ज्ञातवान्। ''सर्वस्य अपि दुष्परिणामस्य अहम् एव कारणम्' इत्यपि सः ज्ञातवान्।

स्वकीयमूर्खताविषये राजा लज्जाम् अनुभूतवान्। अतः मौनं ततः निर्गतवान् च। अनन्तरदिने राज्ये सडिण्डिमघोषं वार्ता प्रसारिता यत् जनाः पूर्ववत् एव इच्छानुगुणं वस्त्रं धर्तुम् अर्हन्ति, इष्टतमया भाषया व्यवहर्तुं शक्नुवन्ति, इष्टदेवतायाः पूजनं कर्तुम् अर्हन्ति, तथैव स्वकीयसम्प्रदायस्य पालनं कर्तुं शक्नुवन्ति इति।






तपश्चर्यां समाप्य मेना हिमवान् च स्वकीयं प्रासादं प्रत्यागतवन्तौ। कालान्तरे मेना गर्भिणी जाता। पञ्चग्रहेषु उच्चस्थानेषु स्थितेषु सा एकं पुत्रं प्रसूतवती। सः पुत्रः मैनाक-नाम्ना प्रसिद्धः अभवत्। एतदनन्तरं मेना नवनवतिपुत्रान् प्रसूतवती।

अनन्तरं मेना पुनः अपि गर्भिणी जाता। नवमासानन्तरं आर्द्रानक्षत्रयुतायां चैत्रशुक्ल-नवम्याम् सा पुत्रीं प्रसूतवती। एतत्सन्दर्भे सर्वाः दिशः प्रकाशेन व्याप्ताः आसन्। देवाः पुष्पवृष्टिं कृतवन्तः। ब्रह्मविष्णुमहेन्द्रादयः महाशक्त्याः स्तोत्रं कृतवन्तः।

जातमात्रस्य अस्य स्त्रीशिशोः चत्वारः हस्ताः आसन्। ललाटे नेत्रम् आसीत्। शरीरं नीलवर्णेन प्रकाशते स्म। कालीदेव्याः स्वरूपेण जातः आसीत् सः शिशुः। स्वपुत्र्याः एतत् असाधारणं रूपं दृष्ट्वा मेना महाशक्ति साधारणरूपं धर्तुं प्रार्थितवती। देवी तस्याः प्रार्थनाम् अङ्गीकृतवती। सुन्दरबालिकायाः रूपं धृत्वा रोदितुम् आरब्धवती च।

पुत्र्याः जन्मवार्तां श्रुत्वा हिमवान् बहु सन्तुष्टः। पुरोहितेन गुरुवृद्धैः च सह प्रसूतिका-गृहम् आगतवान्। सर्वत्र कर्पूरदीपाः ज्वालिताः। कस्तूरिजलानि सिक्तानि। धन-धान्यादयः आभरणानि वस्त्राणि च दानरूपेण यथेष्टं वितीर्णानि। अन्तःपुरस्त्रियः गीतवत्यः नर्तितवत्यः च।

एतस्याः बालिकायाः नाम पार्वती इति

३. पार्वत्याः जन्म।



निश्चितम्। एषा पार्वती क्रमशः किशोरावस्थां प्राप्तवती। सा सखीभिः सह सर्वत्र सञ्चरति। सिंहम् आरुह्य पर्वतप्रदेशेषु भ्रमति। नदी-तीरेषु गुहासु पर्वतकन्दरेषु च सलीलं क्रीडति।

कदाचित् सा आत्मानं मातरं मन्यमाना, सखीः पुत्रीः मन्यमाना च सर्वाभ्यः फलपुष्पाणि वितरति। कन्दुकक्रीडनसमये सा कन्दुकं सखीभ्यः प्रदर्शयन्ती वदति- "एषः ब्रह्माण्डः, अहम् एवं क्रीडयामि" इति।

पाञ्चालिकाभिः क्रीडनसन्दर्भे सा ताः पाञ्चालिकाः ब्रह्मविष्णुमहेश्वरादिनाम्ना आह्वयति वदति च- "पश्यतु, एते मम हस्ते नृत्यन्ति" इति। सिकतासु गृहं निर्माय वदति- "अहं ब्रह्मा अस्मि" इति। गृहम् अलङ्कुर्वती वर्धयन्ती च वदति- "अहं विष्णुः अस्मि।" कोपेन गृहं पातयन्ती आत्मानं महेश्वरं वदति। पार्वत्याः एतादृशवाक्यानाम् तत्त्वार्थं तस्याः सख्यः न जानन्ति स्म। 'एषा बाललीला' इति ताः चिन्तयन्त्यः सन्तोषम् अनुभवन्ति स्म।

विद्याभ्यासे अपि पार्वती निपुणा एव। विनायासेन सा सर्वाः विद्याः सम्पादितवती। विद्याभ्यासात् अन्यसमयेषु सा अविकतया ध्याने मग्ना भवति स्म। सामगानैः शिवस्य स्तुतिं करोति स्म। एतादृशसन्दर्भेषु सख्यः यदि तां पार्वतीनाम्ना आह्वयन्ति तर्हि सा उत्तरं न ददाति स्म। यदा 'शिवानि' इति आह्वयन्ति तदा प्रतिक्रियां प्रदर्शयति स्म।

सिंहवाहिन्याः अस्याः हस्ते कदाचित् धनुर्बाणादयः त्रिशूलं च दृश्यन्ते स्म। सा कदाचित् अपि सिंहात् अन्यं वाहनं न आरोहति। न अन्यानि शस्त्राणि धारयति। कदाचित् सा वीणावादने तत्परा भवति। वीणावादनं श्रुत्वा विद्याधराः अपि लज्जाम् अनुभवन्ति स्म। पुनः कदाचित् सा अप्सरसः इव मनोहरं नृत्यति। पुनरन्यदा फलके शिवस्य चित्रं निर्माय सखीभ्यः प्रदर्शयति।

तेषु दिनेषु एकदा नारदमुनिः हिमवतः गृहम् आगतवान्। हिमवान् गौरवपूर्वकं तस्य स्वागतसत्कारं कृतवान्। तम् उचिते आसने उपवेश्य पुत्रीं पार्वतीम् आहूतवान्। पितुः



सङ्केतानुसारं पार्वती नारदं नमस्कृतवती। हिमवान् पुत्रीं स्वपार्श्वे उपवेश्य नारदं पृष्टवान् "मुनिवर! भवान् तु सर्वज्ञः। 'अस्याः पतिः कः भवेत् इति वक्तुम् अर्हति" इति।

पार्वत्याः हस्ते विद्यमानान् अङ्कुश-गज-मीन-रथादीन् सङ्केतान् दृष्ट्वा नारदः उक्तवान्- "भवतः पुत्र्याः हस्ते महाशक्ति-लक्षणानि दृश्यते। लक्ष्मी-सरस्वत्योः इव एतस्याः अपि सर्वत्र पूजा भविष्यति। शिवः एतस्याः पतिः भवितुम् अर्हति। अतः भवान् निश्चिन्तः भूत्वा शिवपार्वत्योः विवाहार्थं प्रयत्नं करोतु" इति।

नारदस्य निर्गमनानन्तरं हिमवान् मेनाम् उक्तवान्- "आवां पूर्वं महाशक्तिं प्रार्थितवन्तौ आस्म किल- भवती आवयोः पुत्रीभूय जन्म प्राप्नोतु, शिवं परिणेष्यतु च इति। अद्य नारदेन यत् उक्तं तत् पूर्वकृतप्रार्थनायाः अनुरूपम् एव अस्ति" इति।

प्रसन्ना मेना उक्तवती- "अस्माकं पुत्री पार्वती इदानीं विवाहयोग्या अस्ति। अतः भवान् अविलम्बेन पुत्र्याः विवाहार्थं उद्युक्तः भवतु" इति।

..... इतः सतीमरणानन्तरं शिवः पत्न्याः शरीरं स्कन्धे आरोप्य विश्वभ्रमणे प्रवृत्तः। सः गङ्गासागर-सङ्गमसमीपे कालीघट्टे ताण्डवनृत्यं कृतवान्। तदा विष्णुः स्वमायया सतीं कालीरूपेण तत्र प्रतिष्ठापितवान्, शिवं ज्ञानम् उपदिष्टवान् च। परम-वैराग्येन प्रेरितः शिवः तत्रैव वीरासने उपविश्य घोरे तपसि मग्नः जातः।

शिवः भक्तवत्सलः किल? तपसा यः कोऽपि तं प्राप्तुम् अर्हति स्म। अतः हिमवान् चिन्तितवान्- 'पार्वती अपि तपसि मग्ना भवतु' इति। सः एतं विचारं पार्वत्यै निवेदितवान्।

एतेन प्रस्तावेन पार्वती बहु सन्तुष्टा। शिवं पतिरूपेण प्राप्तुम् इच्छन्ती सा तपसि उद्युक्ता जाता।

एतदनन्तरं हिमवान् मेना च आत्मना




सह पार्वतीं नीत्वा शिवस्य तपोभूमिं कैलासं गतवन्तौ। शिवः तपसि लीनः आसीत्। तस्य चतुर्षु दिक्षु गणाधिपतयः आयुधसहितं स्थिताः आसन्। केचन शिवस्य परिचर्यायां निरताः आसन्। शिवस्य समीपं गन्तुं हिमवते रुद्रगणीयैः अनुमतिः दत्ता।

सपत्नीकः हिमवान् शिवं भक्तिपूर्वकं नमस्कृतवान्। फलपुष्पादीनि समर्प्य हस्तौ बद्ध्वा पार्श्वे स्थितवान् च।

शिवः स्वनेत्रम् उद्घाटितवान्। हिमवन्तं दृष्ट्वा उक्तवान् च- "हिमालय! भवान् तु पवित्रात्मा। अतः भवदधीने अस्मिन् कैलासपर्वतप्रदेशे तपः आचरन् अस्मि।"

"महात्मन्! भवान् अत्र तपः आचरति इत्येतत् मम सौभाग्यम्। भवतः तपःकार्ये विघ्नः यथा न भवेत् तथा अहं व्यवस्थां करोमि" इति हिमवान् विनयपूर्वकम् उक्तवान्।

प्रसन्नः शिवः उक्तवान् "हिमालय! भवतः भक्त्या अहं प्रसन्नः अस्मि। यत् इच्छति तत् पृच्छतु" इति।

"प्रभो! मम पुत्री भवतः सेवां कर्तुम् अभिलषन्ती अस्ति। अतः अहं तया सह भवतः समीपम् आगतवान् अस्मि। मम प्रार्थनां भवान् सफलीकरोति इति मम विश्वासः अस्ति। कृपया भवान् एतदर्थम् अनुगृह्णातु" इति शिवः अञ्जलिबद्धः प्रार्थितवान्।

"स्त्रीभिः तपस्विनां सेवाकरणं न उचितम्। आवश्यकं चेत् भवान् अत्र स्थित्वा सेवां कर्तुम् अर्हति" इति उक्तवान् शिवः।

"महात्मन्! मम पुत्री कन्यका अस्ति। पराशक्त्याः महादेव्याः वरदानेन एषा जन्म प्राप्तवती। अतः सा तपस्विनः भवतः तपोभङ्गस्य कारणं न भविष्यति। अतः भवान् मम प्रार्थनां सफलीकरोतु। पुत्र्याः सेवाम् अङ्गीकरोतु" इति हिमवान् विनयेन पुनः निवेदितवान्। शिवः तत् अङ्गीकृतवान्।

सतीदेव्याः देहत्यागानन्तरं शिवः कदाचित् कैलासे तपसि मग्नः सन् उपविष्टः आसीत्। तदा तस्य ललाटतः उष्णतासमुद्भूतः कश्चन




स्वेदजलबिन्दुः भूमौ पतितः। एतेन स्वेदकणेन एकः पुत्रः उत्पन्नः। सः आजानुबाहुः आसीत्। कृष्णवर्णीयस्य तस्य शरीरं स्थूलम् आसीत्। भूदेवी तं पुत्रम् उन्नीय शिवसमीपम् आगत्य शिवाय पुत्रं प्रदर्शितवती।

शिवः भूदेवीम् उक्तवान्- ''मम स्वेदकणेन समुत्पन्नः एषः भौमनाम्ना प्रसिद्धः भविष्यति। एषः भवत्याः यशसः कारणम् अपि भविष्यति'' इति।

कालान्तरे भौमः प्रवृद्धः। घोरं तपः तप्तुं काशीं गतवान् च। तदीयतपसा सन्तुष्टः विश्वेश्वरः भौमाय ग्रहमण्डले स्थानम् उपकल्पितवान्। एतस्य भौमस्य नामान्तरं कुजः अङ्गारकः च इति।

यदा शिवः तपसि लीनः आसीत् तेषु दिनेषु गङ्गा भूमिम् अवतीर्णा। ऋषयः पितृदेवताः च ब्रह्माणं प्रार्थितवन्तः आसन् यत् पृथिव्यां सर्वदा जलस्य अभावः। अतः कोऽपि उपायः चिन्तनीयः इति। ब्रह्मा तेषां प्रार्थनाम् अङ्गीकृत्य स्वकमण्डलुतः एकं जलबिन्दुं पातितवान्। सः बिन्दुः महतः प्रवाहस्य आकारेण भूमौ अग्रे प्रवहन्ती गता। शिवः गङ्गायाः भीषणप्रवाहं दृष्ट्वा 'एतेन भूमिः विपद्ग्रस्ता भवेत्' इति आशङ्कया किञ्चिदिव भीतः। अतः सः तं प्रवाहं स्वजटासु धृतवान्। प्रवाहस्य एकं बिन्दुं मानससरोवरे त्यक्तवान्। अनन्तरं पुनः तपसि लीनः च।

अत्रान्तरे कश्यपस्य द्वितीयपत्नी दक्षस्य पुत्री दितिः, हिरण्यकशिपवे हिरण्याक्षाय च जन्म दत्तवती। एतौ उभौ अपि शक्तिशालिनौ क्रूरौ अत्याचारिणौ च। तौ उभौ अपि लोकपीडने प्रवृत्तौ। तयोः पीडया जगत् उद्धर्तुं विष्णुः वराहावतारं नृसिंहावतारं च प्राप्य तयोः संहारं कृतवान्। एतेन दितिः पुत्रशोकेन पीडिता अभवत्। कश्यपस्य अनुग्रहेण पुनः गर्भं धृतवती च। 'एकः प्रबलः शत्रुः सद्यः एव उत्पत्स्यते' इति ज्ञात्वा इन्द्रः भीतः अभवत्। अतः सः स्ववज्रायुधस्य साहाय्येन दितेः गर्भे स्थितं पिण्डं छिन्नविच्छिन्नं कृतवान्। किन्तु कश्यपस्य अनुग्रहेण पिण्डस्य




अंशाः न मृताः। कालान्तरे ते मरुद्गणरूपेण जन्म प्राप्तवन्तः। ततः इन्द्रस्य सेवार्थं प्रस्थिताः च।

एतेन दितेः अतीव निराशा जाता। अतः सा पुत्रदानार्थं पतिं पुनः प्रार्थितवती। तदा कश्यपः "ब्रह्माणम् उद्दिश्य किञ्चित्कालं तपः करोतु" इति सूचितवान्। दितिः कश्यपस्य वचनम् अङ्गीकृतवती। ब्रह्मणः अनुग्रहेण वज्रकायं कञ्चित् पुत्रं प्राप्तवती। तदीयवज्रकायतां दृष्ट्वा मातापितरौ तदीयं नाम 'वज्राङ्गः' इति निश्चितवन्तौ।

वज्राङ्गस्य जन्मसमये समग्रे जगति उल्कापातः, भूकम्पः चण्डमारुतः इत्यादयः उत्पन्नाः।

यदा सः युवकः जातः तदा माता उक्तवती- "पुत्र! देवाः मां बहुधा पीडितवन्तः सन्ति। ते भवतः अग्रजौ हिरण्यकशिपुं हिरण्याक्षं च मारितवन्तौ। मरुद्गणीयाः यदा मम गर्भे आसन् तदा इन्द्रः मम गर्भपिण्डस्य उपरि वज्रायुधं प्रयुक्तवान्। अतः भवता एतस्य सर्वस्य अपि प्रतीकारः साधनीयः" इति।

मातुः आदेशेन वाज्रङ्गः दैत्यसेनां सङ्घटितवान्। शीघ्रम् एव इन्द्रपुर्याः उपरि आक्रमणं कृतवान्। वज्राङ्गः स्वसेनाबलेन देवान् सम्यक् पीडितवान्। इन्द्रं कारागारे स्थापयित्वा स्वर्गे स्वकीयम् अधिकारम् उपस्थापितवान्। एतत्सर्वं श्रुत्वा दितिः बहु सन्तुष्टा।

युद्धक्षेत्रात् पलायिताः देवाः ब्रह्मणः समीपं गत्वा पराजयवृत्तान्तं निवेदितवन्तः। ब्रह्मा देवानां वचनानि सहानुभूतिपूर्वकं श्रुतवान्। अनन्तरं कश्यपेन सह वज्राङ्गसमीपं गतवान्। 'इन्द्रस्य बन्धविमोचनं करणीयम्, स्वर्गः देवानां वशे अर्पणीयः च' इति अनुरोधपूर्वकं निवेदितवान्।

वज्राङ्गः उत्तरितवान्- "अहं धनसम्पत्तये देवैः सह युद्धं न कृतवान्। इन्द्रः दुष्टः अत्याचारी च। सः मम मातरं पीडितवान्। मातुः गर्भं छिन्नविच्छिन्नं कृतवान्। अतः एषः विमोचनयोग्यः न। तथापि भवताम् अनुरोधं पुरस्कुर्वन् तं बन्धविमुक्तं करोमि। इतः परं यदि सः

मम मातुः हृदयं न क्लेशयति तर्हि अहम् अपि तं न पीडयामि'' इति।

वज्राङ्गस्य विनयेन, 'विवादं विना इन्द्रं बन्धमुक्तं करोति' इति ज्ञात्वा च ब्रह्मा बहु सन्तुष्टः। 'वरं पृच्छतु' इति सः वज्राङ्गं सूचितवान्।

''अहं केवलं परब्रह्मणः तत्त्वं ज्ञातुम् इच्छामि। समस्तप्राणिनां हितं च इच्छामि। एतयोः दानेन माम् अनुगृह्णातु'' इति वज्राङ्गः ब्रह्माणं प्रार्थितवान्।

वज्राङ्गस्य प्रार्थनया ब्रह्मा सन्तुष्टः अभवत्। भवदीयम् अभीष्टं सफलं भविष्यति इति आशिषा अनुगृह्य वराङ्गीं नाम कन्यां तस्मै दत्तवान्। वराङ्गीवज्राङ्गयोः विवाहः सम्पन्नः। अनन्तरं कश्यपादयः ततः निर्गताः। एतदनन्तरं वज्राङ्गः सात्त्विकगुणोपेतः सन् स्वनगरं प्रत्यागतवान्। शिवस्य आराधनायां शेषजीवनं यापितवान्।

कानिचन दिनानि अतीतानि। वज्राङ्गस्य पत्नी वराङ्गी साध्वी। तस्याः सेवया प्रेम्णा च वज्राङ्गः बहु सन्तुष्टः। अतः एकदा सः पत्नीम् उक्तवान्-''भवती यत् इच्छति तत् पृच्छतु'' इति।

तदा वराङ्गी उक्तवती- ''भवान् यदि मद्विषये सुप्रसन्नः तर्हि अत्यन्तशक्तिशालिनम् इन्द्रजेतारं पुत्रम् अनुगृह्णातु'' इति।

वराङ्ग्याः एतया प्रार्थनया वज्राङ्गः व्याकुलितः अभवत्। वराङ्गी स्त्रीसुलभेन चाञ्चल्येन अज्ञानेन च वशीभूता देवविरोधिनं पुत्रम् अपेक्षितवती आसीत्।

वज्राङ्गस्य एकत्र पत्नीव्यामोहः। अतः पत्न्याः इच्छां निराकर्तुं सः न इच्छति। यदि पत्न्याः इच्छां तथास्तु इति अङ्गीकरोति, तर्हि जनिष्यमाणः पुत्रः शीघ्रम् एव विष्णुहस्ततः मरणं प्राप्नुयात् एव। अतः वज्राङ्गः द्वैधीभावे पतितः।

समस्यां परिहर्तुं अशक्तः सः ब्रह्माणम् उद्दिश्य दीर्घकालिके तपसि लीनः अभवत्।





# दासस्य रहस्यम्

पूर्वं कदाचित् वर्षद्वयं यावत् वृष्टिः न जाता। बस्तरनगरं परितः विद्यमानाः जनाः क्षामपीडिताः सन्तः जलाभावेन बहु कष्टम् अनुभवन्ति स्म। तृतीये वर्षे अपि यदा वृष्टेः लक्षणं कुत्रापि न दृष्टं तदा जनाः भीताः।

जनाः चिन्तितवन्तः आसन्- "अस्मिन् वर्षे वा वृष्टिः भविष्यति एव। अस्माकं कष्टानि समाप्तानि भवेयुः। वयं सद्यः एव सुखमयानि दिनानि पश्यामः" इति। एतया एव आशया ते जीविताः आसन्। किन्तु एषा आशा अपि यदा विफला जाता तदा जनानां हृदयानि विदीर्णानि इव। भगवतः शरणं विना अन्या गतिः न आसीत् तेषाम्।

अस्यां परिस्थितौ एकदा केचन भक्ताः देवमन्दिरं गतवन्तः। आशादृष्ट्या आकाशं पश्यन्तः प्रार्थनां कृतवन्तः- "अये भगवन्! दीनेषु अस्मासु दयां करोतु। क्षामकारणतः सस्यानि सर्वाणि नष्टानि। पानजलस्य अपि अभावात् वयं मरणावस्थाम् आपन्नाः स्मः। कृपया अस्मान् अनुगृह्णातु" इति।

अर्धरात्रपर्यन्तम् अपि एवम् एव प्रार्थना प्रचलन्ती आसीत्। किन्तु आकाशे कुत्रापि मेघस्य दर्शनं नास्ति। अन्ते ते सर्वे श्रान्त्या तत्रैव निद्रावशं गताः।

तेषु भक्तेषु एकः जागरूकः एव आसीत्। सः श्यामवर्णीयं कञ्चित् पार्श्वशैलसमीपं गच्छन्तं दृष्टवान्। एतेन भक्तस्य कुतूहलः प्रवृद्धः। 'एषः अत्र किं कुर्यात्?' इति चिन्तयन् सः तं युवकं पश्यन् उपविष्टः।

सः युवकः शैलम् आरुह्य जानुना उपविष्टवान्। किञ्चित्कालं मौनम् उपविश्य अनन्तरं आकाशं पश्यन् उक्तवान्- "देव! कष्टपीडितानाम् एतेषां भक्तानां वचनं शृणोतु तावत्। भवान् मयि स्निह्यति इति

"अरेबिया कथा"



जानाति ? महाभक्तानां प्रार्थनाः अपि असफलाः सन्ति। देवः कस्यापि विषये न प्रीतः। एवं स्थिते कथं सः भवतः विषये प्रीतिं प्रदर्शयेत् ? किं भवतः प्रार्थनया वृष्टिः भविष्यति ? दासस्य भवतः वचनं कः शृणोति ?'' इति।

युवकः क्षणकालं मौनं स्थितवान्। अनन्तरम् पृष्टवान् च- ''देवस्य प्रीतिः यदि मयि न स्यात् तर्हि अहं कथं जानामि स्म- देवः अस्ति इति ? देवः दयालुः इति विश्वासः कथं वा मम मनसि दृढं तिष्ठति स्म ?'' इति। एवम् उक्त्वा सः द्वित्राणि पदानि अग्रे गत्वा आकाशं पश्यन्– ''सहोदर ! आकाशं परि–शीलयतु तावत्। तदा देवः मयि स्निह्यति वा न वा इत्येतत् भवता स्वयं ज्ञायते'' इति भक्तम् उक्त्वा अग्रे गतवान्।

भक्तः आश्चर्येण आकाशं दृष्टवान्। एतावत्पर्यन्तं यः आकाशः स्वच्छम् आसीत् तत्र इदानीं कृष्णवर्णीयाः मेघाः सम्मिलिताः सन्ति। देवस्य महिमानं स्मरन् सः यावत् अग्रे गन्तुम् उद्युक्तः तावति काले धाराकारवृष्टिः आरब्धा।

भक्तः तं दासम् अन्विष्टवान्। किन्तु सः कुत्रापि न दृष्टः। वृष्टिकारणतः जागरिताः सर्वे भक्ताः धावन्तः मन्दिरं प्रविष्टवन्तः।

प्रातःकालपर्यन्तं एवम् एव धाराकारवृष्टिः आसीत्। शुष्काः सरोवराः कूपाः च इदानीं

इति अहं जानामि। अहं भवन्तम् अञ्जलिबद्धं प्रार्थयामि- शीघ्रम् एव वृष्ट्या अनुगृह्णातु। सर्वे जनाः उज्जीविताः भवन्तु'' इति।

प्रार्थनां परिसमाप्य युवकः शैलात् अवतीर्णः। स्वस्थानं प्रस्थितं तं युवकं सः जागरितः भक्तः पृष्टवान्- ''भवान् कः ?'' इति।

''अहं कश्चन दासः। मन्दिरस्य पृष्ठतः विद्यमाने भवने ये दासाः निवसन्ति तेषु अन्यतमः अहम्। दासवणिक् अस्मदीयः स्वामी अस्माकं विक्रयणार्थम् उद्युक्तः अस्ति'' इति उक्तवान् सः युवकः।

युवकस्य एतानि वचनानि श्रुत्वा भक्तः गर्जितवान्- ''दासस्य भवतः कियत् धाार्ष्ट्यम् ? भगवान् भवति स्निह्यति इति भवान् कथं

जलेन पूर्णाः। सर्वे जनाः अवर्णनीयेन आनन्देन उन्मत्ताः इव जाताः।

तद्दिने रात्रौ सर्वे भक्ताः मन्दिरे सम्मिलिताः। तस्य दासस्य अन्वेषणार्थं प्रयत्नम् आरब्धवन्तः। केचन दासवणिजः समीपं गत्वा तं पृष्टवन्तः- "विक्रयणयोग्यः कोऽपि दासः अस्ति वा"? इति।

"एकः किं, बहवः सन्ति" इति वदन् सः वणिक् तान् दाससमीपं नीतवान्।

वणिजः अधीने विंशतिदासाः आसन्। तेषु अधिकाः तरुणाः। भक्ताः तेषु वृष्टिकारकस्य तस्य युवकस्य अन्वेषणं कृतवन्तः। किन्तु सः तत्र न आसीत्। निराशया ते सर्वे प्रतिनिवृत्ताः। अत्रान्तरे एकत्र कोणे द्वारस्य पृष्ठतः कश्चन तैः दृष्टः। यः भक्तः पूर्वदिने तं शैलम् आरुहन्तं दृष्टवान् आसीत् सः तदीयपरिचयं प्राप्तवान्।

भक्तः यदा तस्य समीपं गतवान् तदा दासवणिक् उत्थातुम् आज्ञप्तवान्।

"वयम् एतं क्रेतुम् इच्छामः" इति उक्तवान् सः भक्तः। दासवणिक् आश्चर्यं प्रकटयन् उक्तवान्- "अहं प्रामाणिकः वणिक्। भवन्तः यं इच्छन्ति, सः मतिभ्रान्तः। भवन्तः उत्तमं दासम् इच्छन्ति चेत् अहम् एव कञ्चित् अन्यं सूचयामि।"

"वयम् एतम् एव युवकम् इच्छामः" इति उक्तवान् भक्तः। दासवणिक् तं युवकम् अल्पेन मूल्येन विक्रीतवान्। भक्ताः तं



आत्मना सह नयन्तः मार्गम् आगतवन्तः। तदा दासः शिरः अवनमय्य नमस्कारं कृत्वा उक्तवान्- "अये स्वामिनः ! मया किं करणीयम् इति आदिशन्तु" इति।

"भवता एव वयम् आज्ञापनीयाः। भवान् एव अस्माकं स्वामी। भवान् भगवतः प्रीतिपात्रम् इति वयं सुस्पष्टं जानीमः" इति उक्तवन्तः भक्ताः।

एतत् श्रुत्वा दासः युवकः कुतूहलपूर्णदृष्ट्या तान् दृष्टवान्। तदा गतरात्रौ तं यः दृष्टवान् आसीत् सः भक्तः अग्रे आगत्य उक्तवान्- "भवान् मां ज्ञातवान् किल ? शैलम् आरुह्य भवता प्रार्थना कृता। प्रत्यागमनसमये मया सह वार्तालापं कृतवान्। अनन्तरं वृष्टिः आगता। एतत्सर्वं स्मरति किल भवान् ?"

"ओह् ! एवं वा ?" इति उद्गारं प्रकटयन् सर्वान् भक्तान् पश्यन् दासः पुनः उक्तवान्- "रात्रौ मया किं कृतम् इति अहम् एव न जानामि। इदानीं मन्दिरे प्रार्थनां कर्तुम् अवकाशं कल्पयन्ति चेत् अहं उपकृतः भवामि"

"प्रार्थना ! अवश्यं भवतु। भवतः दासाः वयम् अपि भवन्तम् अनुसरामः" इति भक्ताः एकस्वरेण उक्तवन्तः।

सः दासः युवकः मन्दिरं प्रविष्टवान्। जानुना उपविश्य प्रार्थितवान्- "भगवन् ! मद्विषये भवतः या प्रीतिः आसीत् सा इदानीं प्रकटिता अभवत्। इतः परं सर्वे जनाः मां परितः आगत्य विशेषगौरवेण मम सत्कारं कुर्वन्ति। एकान्ते भवतः ध्याने मया यः आनन्दः प्राप्यते स्म, स च आनन्दः इतः परं दुर्लभः एव भविष्यति। अतः भवान् एतत्क्षणेन एव मां भवतः सन्निधौ नयतु" इति।

एतदनन्तरं सः बहुकालपर्यन्तं तथैव उपविष्टः आसीत्। न वचनं, न वा स्पन्दनम्। संशयापन्नाः जनाः समीपं गत्वा तस्य शरीरं कम्पितवन्तः। हन्त ! सः दासः तत्रैव गतप्राणः आसीत्।



पक्षिणः पशवः च –

# आयुःप्रमाणम्

अष्टादशशतके साहसी नाविकः इति ख्यातः केप्टन् जेम्स् कुक् १७७३तमे वत्सरे दक्षिण प्रशान्त-महासागरस्य द्वीपं बोङ्गां सन्दृष्टवान्। मैत्रीप्रतीकरूपेण सः तद्द्वीपस्य महाराजाय एकं कूर्मम् उपायनरूपेण दत्तवान्। तद्द्वीपजनाः टुई हेल्ला इति नाम्ना तं कूर्मम् आहूतवन्तः। सः कूर्मः १९६६तमे वत्सरे मृतः। तदीयम् आयुः २००वर्षात्मकम् आसीत्।

मानवस्य आयुः-प्रमाणं ११० वर्षाणि चेदपि सामान्यम् आयुः तु ७० वर्षाणि। मनुष्यः इव पशवः अपि केचन चिरं जीवन्ति। केचन कूर्माः कदाचित् १५२ वर्षपर्यन्तं जीवन्ति इत्येतत् साधारं प्रमाणीकृतम् अस्ति।

पशूनाम् अपेक्षया पक्षिणाम् आयुः अल्पम्। तथापि आस्ट्रेलियादेशे केचन शुकाः ५६ वर्षपर्यंतं, ७६ वर्षपर्यंतं च जीवितवन्तः इति श्रूयते। उलूकाः ६२ वर्षाणि यावत् जीवन्ति। सालव-जातीयः गृध्रः ७२ वर्षाणि, समुद्रकाकः ३६ वर्षाणि, चातकपक्षी १६-२१ वर्षाणि च जीवन्ति। विल्लोवार ब्लर् नामकः गायकः पक्षी ५ वर्षाणि जीवति। केचन मीनाः १५० वर्षाणि यावत् जीवन्ति।

पूर्वोक्तानाम् अपेक्षया सस्तनिपशूनाम् आयुः न अधिकम्। अश्वाः ६२ वर्षाणि तिमिङ्गिलाः गजाः च ५० वर्षाणि, यावत् जीवन्ति। अपवादरूपेण केचन गजाः ८० वर्षाणि जीविताः इति श्रूयते।





## चित्रशीर्षिका-स्पर्धा  पारितोषिकं ५०/- रूप्यकाणि

**विजितां शीर्षिकां अगस्ट-८५ मासे प्रकटयिष्यामः ।**





❀उपरितनं चित्रद्वयं पश्यन्तु । तस्य युक्तां शीर्षिकां परस्पर-सम्बन्धि–वाक्यद्वयेन लिखित्वा जून्-२० दिनाङ्कतः पूर्वम् एव प्रेषयन्तु । अनन्तरम् आगताः शीर्षिकाः न परिशीलयिष्यामः। स्पर्धायां विजेता ५०/ – रूप्यकात्मकं पारितोषिकं प्राप्स्यति । ❀ शीर्षिकाः समपत्रे (पोस्ट्-कार्ड्) लेखनीयाः। तत्र अन्यः विषयः न लेखनीयः । ❀अधोनिर्दिष्ट-सङ्केताय शीर्षिकाः प्रेषणीयाः–

चन्दमामा (संस्कृतम्)
७३/२ 'अक्षरम्' रङ्गरावूमार्गः, शङ्करपुरम्, बेङ्गलूरु–५६०००४

---

'एप्रिल्' मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः–

प्रथमचित्रम्– करे सृष्टिः ।
द्वितीयचित्रम्– परे दृष्टिः ।

प्रेषकः– श्री नरसिंहन्, सूरि क्लर्कं, १११-४ वि.ओ. सि स्ट्रीट्, तिरुनेल्वेली-६

# भवन्तः जानन्ति वा ? (उत्तराणि)

१. कर्डिनण्ड् मेगालिन् महोदयेन । २. जावा ट्रेञ्च । ३. पाक्-जलसन्धिः
४, अमेजान् नदी । (दक्षिणआफ्रिका प्रदेशे प्रवहति ।) ५. टैफर नदी ।

Printed by B. V. REDDI at Prasad Process Private Ltd., and Published by B. VISWANATHA REDDI for CHANDAMAMA CHILDREN'S TRUST FUND (Prop. of Chandamama Publications) 188, Arcot Road, Madras-600 026 (India). Controlling Editor: NAGI REDDI.

# कठिनशब्दानां सान्दर्भिकाः अर्थाः।

| | |
|---|---|
| अजः- | Goat |
| अतिशेते- | Exceeds |
| अवहेलनम्- | Disgrace |
| आतपः- | Sunshine |
| आशुकविता- | Extempore poetry |
| कण्डोलः- | Basket |
| कमण्डलुः- | Vessel carried by ascetics |
| कर्पूरः- | Camphor |
| काकुः- | Irony |
| काष्ठविदारणम्- | Cutting the wood |
| किशोरावस्था- | Teenage |
| कुसीदव्यवहारः- | Money-lending |
| कौशेयवस्त्रम्- | Silk cloth |
| खाद्यम्- | Eatable |
| खुरपुटध्वनिः- | Sound of hoofs |
| गर्तः- | Pit |
| घृतम्- | Ghee |
| चक्रवृद्धिः- | Compound interest |
| जडः- | Docile |
| तृणम्- | Grass |
| दंष्ट्रा- | Canine tooth |
| धूमः- | Smoke |
| पाञ्चालिका- | Doll |
| पुच्छम्- | Tail |
| प्रसूतिकागृहम्- | Maternity room |
| फेनः- | Surf |
| भोजनकूटः- | Dinner gathering |
| भाटकगृहम्- | Rented house |
| भ्रातृजाया- | Sister-in-law |
| मद्यम्- | Liquor |
| वराहः- | Pig |
| वृकः- | Wolf |
| व्याधः- | Hunter |
| शष्कुली- | —An edible item — |
| शाकटिकः- | Cart driver |
| शिबिरम्- | Camp |
| शैलः- | Hill |
| सघोषविक्रयणम्- | Auction |
| सडिण्डिमघोषं- | Announcement with drum |
| सन्तोलनम्- | Balancing |
| समकक्षः- | Equal |
| सहनम्- | Forbearance |
| सहसा- | Unexpectedly |
| सिकता- | Sand |
| स्रोतः- | Stream |
| स्वेदः- | Sweat |

# परीक्षा

| | |
|---|---|
| रमाकान्त:- हरि: ओं रमेश, अहम् उत्तीर्ण: । | Hari Om Ramesh, I have passed. |
| श्रीश:- सफलतायै अभिनन्दनानि । मधुरं कुत्र ? | Congratulations, where are the sweets? |
| र- आगच्छतु भो:, इदानीं एव दापयामि । | Come on, I will get you sweets right now. |
| श्री- अस्तु तावत्, का श्रेणी प्राप्ता ? | Okay, you got a class? |
| र- द्वितीयश्रेण्याम् उत्तीर्ण: । | I got a second class. |
| श्री- द्वितीयश्रेण्याम् ! | Second class! |
| र- आं भो:, अङ्कद्वयत: प्रथमश्रेणी न प्राप्ता। प्रथमश्रेणी प्राप्येत इति आशा तु आसीत् मम । | Yes. I expected a first class no doubt, but missed it just by two marks. |
| श्री- वस्तुत: अद्यतनशिक्षणपद्धतौ एव दोष: अस्ति । परीक्षायाम् अव्यवहार: । मौल्यमापने अप्रामाणिकता । | The fact is, standard of teaching has gone down. There are malpractices in examinations and valuation is also not perfect. |
| र- अथ किम् ? अत: एव किल गोविन्द: अपि द्वितीयश्रेणीं प्राप्तवान् । | That is how Govinda too got a second class. |
| श्री- गोविन्द: उत्तीर्ण: वा ! तत्रापि द्वितीय-श्रेण्याम् ! धनमूलम् इदं जगत् । गणेशस्य का वार्ता ? | What! Govinda has passed! In second class! The whole world rests on money. What about Ganesha? |
| र- (हसन्) स: पुन: अपि पत्रिकाद्वये अनुत्तीर्ण: । | (Laughing) He has failed again in two papers. |
| श्री- हन्त वराक: ! सहस्रवारं पठति चेदपि न स्मरति । | What a pity! He reads a thousand times, but even then he doesn't remember. |
| र- अये, आर्यभवनं गच्छाव: उत. . . . .। | Hi! Shall we go to Arya Bhavan or...? |
| श्री- आर्यभवनम् एव गच्छाव: तावत्। | Let us go to Arya Bhavan. |

मुफ्त ! मुफ्त !! मुफ्त !!!

"मेरी गोल्ड कवरिंग" ने सम्पूर्ण भारत में बहुत नाम कमाया है। हमारी कम्पनी भारत की सभी कम्पानयों में बहुत बड़ी है। पन्द्रह साल की कोशिश ग्रौर तजुर्बे के बाद ही हमारी कम्पनी को पांच साल की गेरन्टी का माल बनाने में सफलता प्राप्त हुई है।




# MERI GOLD COVERING WORKS

**P.O. BOX 1405, 14, RANGANATHAN STREET**
**T. NAGAR MADRAS-600 017 INDIA**

# प्राचीन-भारतस्य भव्यता तथा तेजस्विता




**चन्दमामायाः** लोकप्रियतायाः
एकमात्रं प्रमाणं यत् प्रतिमासम् एतां
१,२०,००,००० बालकाः पठन्ति ।

**चन्दमामायाः** प्रसारसंङ्ख्या सामान्यतः
८,००,००० अस्ति या प्रतिमासं
भारतस्य तथा पूर्वएशियादेशानां कुटुम्बान्,
पाठशालाः तथा पुस्तकालयान् च प्राप्नोति ।

# चन्दमामायां

प्रत्येकमासस्य कथासु
दर्शितम् अस्ति ।
भारतस्य सर्वाधिक प्रसारयुता
बालानां मासिकी ।